# छन्दःप्रवेशिका




ग्रन्थकर्ता

**टीकारामपाण्डेयः**

नव्यव्याकरणाचार्यः प्राचीनन्यायाचार्यश्च



शुद्धान्तःकरणाय मुग्धहसितायाकल्मषोत्साहिने,
गौरीवक्त्रसरोरुहार्कघृणये निर्व्याजभावश्रिये।
टीकाराममनोज्ञमञ्जुविधये सुव्यक्ततत्त्वात्मने,
छन्दोगामिशिवाय सादरमियं छन्दःप्रकाश्यर्प्यते॥

# छन्दःप्रवेशिका

संपादकः

**ज्ञानेन्द्रसापकोटा**

नव्यव्याकरणाचार्यः पूर्वमीमांसाचार्यश्च

ग्रन्थकर्ता

**टीकारामपाण्डेयः**

नव्यव्याकरणाचार्यः प्राचीनन्यायाचार्यश्च

# छन्द:प्रवेशिका

-टीकारामपाण्डेयः



प्रथम संस्करण, 2014
प्रति : 1100

मूल्यम् : 45/-

पुस्तकप्राप्तिस्थानानि :

श्रीगुरुकार्ष्णिविद्याभवनम्
दीनदयालनगर (कबीरनगर),
दुर्गाकुण्ड, वाराणसी - 221010
☎ 08417997951 (विष्णुः)
08960476112 (प्रदीपः)

संस्कृतगङ्गा
59,मोरी दारागञ्ज, इलाहाबाद- 211006
☎ 09839852033
08858548289

अन्नपूर्णाशक्तिपीठ, व्यांकरणविद्यालयः
गणपतिगोशालासमीपे पलवारारोड वृजघाट, उत्तरप्रदेशः
☎ 08533960995
09696852557

रङ्गमन्दिरम्, वृन्दावनम्
☎ 09568666189

मुद्रक एवं प्रकाशक : प्रभा-प्रकाशन, वाराणसी। फो. 09473839433

श्रीरस्तु

# शुभाशंसनम्

श्रीमान् टीकाराममहोदयः छन्दःप्रवेशिकानाम्नीम् इमां लघुपुस्तिकां छन्दश्शास्त्रप्रवेशपरिकल्पनाय विरच्य समाजाय महान्तमुपकारं कृतवान्। अत्र चत्वारः अध्यायाः सन्ति। प्रथमेऽध्याये छन्दश्शास्त्रे प्रयुक्तानां केषाञ्चन पारिभाषिकशब्दानां परिचयः कृतः। प्रसिद्धानां त्रयोदशानां छन्दसां सोदाहरणं विवरणं द्वितीयेऽध्याये कृतम्। तृतीये एकैकाक्षरादारभ्य षड्विंशतिम् अक्षराणि यावत् प्रयुक्तानां षड्-विंशतेः समवृत्तानां छन्दोविशेषाणां सामान्यविवरणम्, चतुर्थेऽध्याये च विषम-अर्धसमवृत्तयोः परिचयः मद्विवृतश्लोकरचनाविधिश्च स्थापितः वर्तते।

वेदेषु मन्त्राः सर्वेऽपि प्रायः केनचिच्छन्दसा बद्धाक्षरा एव। छन्दोद्वारा मन्त्रेषु पठने, श्रवणे, वचने वा कापि मधुरता अनुभूयते। बहूनि शास्त्राणि कारिकानाम्ना वार्तिकनाम्ना छन्दोबद्धतया सरलया रीत्या पूर्वैर्ग्राहितानि। पुराणानीतिहासाश्छन्दोबद्धतया प्रामाण्यमावहन् सामान्यजनानार्थतत्त्वावगाहनाय चोपाकुर्वन्।

आदिकाव्यं रामायणं 'मा निषाद प्रतिष्ठां त्वम् अगमः शाश्वतीः समाः, यत् क्रौञ्चमिथुनादेकम् अवधीः काममोहितम्' इति ब्रह्मणश्छन्दात् वाल्मीकिर्वदनारविन्दगलितेन लौकिकच्छन्दसा श्लोकरूपेण तत्सदृशैः श्लोकैश्चाविर्भूतम्। तदनन्तरं नैकानि काव्यानि नाटकानि च्छन्दोमय्या वाचा आविर्भूतानि। गद्यकाव्यमपि क्वचि-च्छन्दोमय्या रचनया शोभामावहति। छन्दःकारणेन बहवः सिद्धान्ताः नीतयः शास्त्राणि काव्यानि, किम्बहुना वाङ्मयं सर्वं व्याप्तम्। छन्दसि वर्तमानैरक्षरैः मात्राभिश्च गणैः गुरुभिर्लघुभिश्च वृत्तानि पद्यरचने सहकारीणि जायन्ते। अतश्छन्दश्शास्त्रं वृत्तबोधकं शास्त्रमित्यप्युच्यते।

वेदे वर्तमानानां छन्दसां विवरणं तत्तद्वेदप्रातिशाख्यग्रन्थेष्वपि क्वचिदुपलभ्यते। लौकिकच्छन्दोबोधकं छन्दस्सूत्रं पिङ्गलमुनिना प्रणीतं सम्प्रति लभ्यते। वृत्तरत्नाकर इति च प्रसिद्धो ग्रन्थोऽत्र शास्त्रे वर्तते। अन्येऽपि बहवः वृत्तविवेचकग्रन्थाः यद्यपि सन्ति, तथापि टीकाराम-महोदयः अत्र शास्त्रे प्रवेशाय बालानामप्यवगमाय सरलातिसरलया रीत्या छन्दःप्रवेशिकाम् इमाम् उपदाम् अनुरचितवान्। सम्प्रदायस्य अवगमनाय कृतोऽयं ग्रन्थः अत्यल्पे वयसि दिवङ्गतस्य शिशोः शिवस्य स्मृत्यै विरच्य समर्पितवान्।

श्लोकानां रचनाय काव्यानामाविर्भावाय प्रतिभाव्युत्पत्त्य-भ्यासा हेतुः इति मम्मटोक्तिः। अत्र त्रयः समुदिताः हेतुः न तु हेतवः इति शास्त्रकारा निश्चितवन्तः। तत्र काव्यरचनाभ्यासायायं ग्रन्थमल-मुपकरोति जिज्ञासूनां कविताचिख्यापयिपूणां च। व्युत्पत्तिव्याकरणाद् भवति प्रतिभा यद्यपि जन्मान्तरपुण्येन तथापि पूर्वकविकाव्यपठन चिन्तनपदप्रयोगानुलेखनलोकोत्तरकार्यस्थिरप्रयत्नरूपेणोत्साहेन च जायते।

अतः विविदिपवो भावपूर्णाः युवान इमं ग्रन्थं पठित्वा कवयो भवितुं यतन्ताम्, अतिसरलतया विद्यालयेपु पाठ्यभागेनेयं छन्दः-प्रवेशिका कल्पतां, कल्पतां च्छन्दोरसिकानामभिमतप्रदानायेति चाशासे।

शिवे प्रेम्णा भक्त्या सुत इति सदा ध्यातविपये<br>
रसे रुद्रे(ऽ)च्छिन्ने यमनसभले(ऽ)गे शिखरिणि।<br>
प्रणम्य श्रीमातापितृगुरुवरान् प्राच्र्य सुकवीन्<br>
इनां टीकारामोऽर्पयति सुमनश्छन्द उपदाम्॥

इत्याशास्ते,

**दोर्बलप्रभाकरशर्मा**

# किञ्चिन्निवेदनम्

सर्वाण्यपि शास्त्राणि अतीव रहस्यपूर्णानि भवन्तीति तु सर्वविदितमेव। तेष्वेव अन्यतममस्ति छन्दश्शास्त्रमपि। वस्तुतः यदा मया छन्दसाम् अध्ययनम् आरब्धमासीत् तदा 'इदन्तु अतीव सरलम्' इति भावः आसीत् परं शनैः शनैः यदा छन्दोविषयकाः नैके ग्रन्थाः आलोडिताः तदा ज्ञातं यत् अन्यशास्त्राणामिव अस्यापि गाम्भीर्यस्य मापनं न शक्यते इति। परं लौकिकपद्येषु आधिक्येन विद्यमानानि छन्दांसि अल्पान्येव सन्तीति हेतोः अत्यल्पेन श्रमेणैव एतानि अवगन्तुं शक्नुमः।

साम्प्रतं छन्दसां बहवः ग्रन्थाः लभ्यन्ते एव। तेषु सत्स्वपि 'अस्य का आवश्यकता, वैशिष्ट्यञ्च किम्?' इत्यादिप्रश्नाः अस्माकं मनस्सु स्युरेव। अत्र सुधीजनाः एव प्रमाणम्। मम निवेदनम् इदमेव यत् एकवारं वा आन्तं परिशीलयन्तु मनीषिणः इति। वस्तुतः भवतां मनीषिणां प्रतिस्पन्देन आत्मानं धन्यं कर्तुमनसा मया अस्य रचनायां धाष्ट्र्यं दर्शितम्।

अत्र ग्रन्थे चत्वारः अध्यायाः सन्ति तेषु प्रथमेऽध्याये पद्यम्, यतिः, लघुगुरू, गणः इत्यादीनां पारिभाषिकपदानाम् अर्थविवेचनं कृतम्, द्वितीयेऽध्याये काव्येषु आधिक्येन प्रयुक्तानां प्रतियोगि-परीक्षादृष्ट्या प्रसिद्धानां च आर्या, अनुष्टुप्, इन्द्रवज्रा, उपेन्द्रवज्रा, उपजातिः, शालिनी, वंशस्थम्, वसन्ततिलका, मालिनी, शिखरिणी मन्दाक्रान्ता, शार्दूलविक्रीडितम्, स्रग्धरा इत्येतेषां त्रयोदशानां छन्दसां लक्षणानि, तेषाम् अर्थविवरणमुदाहरणेषु लक्षणसमन्वयः च कृतः, तेषां सम्यगभ्यासाय पृथक्तया उदाहरणान्यपि दत्तानि, तृतीये एकाक्षरादारभ्य षड्विंशतिम् अक्षराणि यावत् समवृत्तानां स्थूलरूपेण परिचयः, चतुर्थे च अर्धसमवृत्तस्य विषमवृत्तस्य च परिचयः वर्तते।

'छन्दांसि शब्दविषयाणि न तु अर्थविषयाणि' इति हेतोः अस्मिन् ग्रन्थे लक्षणानाम् अवगमने तेषाम् उदाहरणेषु समन्वयने च यत्नः विहितः न तु उदाहरणानाम् अर्थावगमने। एवञ्च अत्र उदाहरणस्वरूपेण प्रायेण नीतिश्लोकाः एव स्वीकृताः सन्ति। इमं ग्रन्थं यः आन्तं सम्यक्तया अभ्यस्यति तस्य निश्चयेन सामान्यनीति-ज्ञानपूर्वकं लौकिकच्छन्दसु प्रवेशः भविष्यति येन अस्य ग्रन्थस्य नाम छन्दःप्रवेशिका इति अन्वर्था भविष्यतीति निश्चप्रचम्।

'वाक्ये तु संहिता विवक्षाधीना भवति' इति नियमानुसारेण अत्र ग्रन्थे भाषासारल्यदृष्ट्या बहुत्र सन्धिः न कृतः अस्ति।

अत्यल्पे एव वयसि दिवङ्गताय पुत्राय शिवाय श्रद्धाञ्जलि-रूपेण रचितः वर्तते अयं ग्रन्थः। अस्वास्थ्यकारणेन यदा सः चिकित्सालये प्रवेशितः तदा शिवा इति नाम्ना तस्य तत्र प्रसिद्धिः आसीदिति हेतोः अस्य ग्रन्थस्य शिवाव्याख्या चिन्तिता अस्ति।

अस्य ग्रन्थस्य रचनायां बहवः सहयोगं कृतवन्तः तेषु मुख्य-रूपेण सन्ति शतावधानिनः आचार्याः श्रीमन्तः दोर्बलप्रभाकर-शर्मगुरवः। सौभाग्येन अनेकवारं तेषां सान्निध्यं प्राप्तम्। शतावधानिनः इति शब्देनैव तेषां परिचयो जायत एव। जीवनस्य उत्तरार्धेऽपि ते सदा कार्ये एव रताः भवन्ति, अत्यल्पोऽपि कालः तैः व्यर्थं न याप्यते। संस्कृते संस्कृतच्छात्रेषु च तेषाम् अतीव स्नेहः, अतः आ बहोः कालात् स्वगृहे एव पञ्चदशाधिकानां बालिकानां द्वित्राणां बालकानां च सर्वदृष्ट्या पोषणं कुर्वाणाः सन्ति। शतावधानिनः सन्ति चेदपि तेषां व्यवहारः कियान् सरलः अस्तीति वर्णयितुं न शक्यते। बालैः सह बालवत् क्रीडन्ति, युवभिः सह युववद्व्यवहारः अस्ति। एतत्सर्वं मया प्रत्यक्षतया दृष्टमस्ति। अस्मास्वपि तेषां महान् स्नेहः। इमं ग्रन्थं ते आन्तं परिशील्य शुभाशंसनं श्लोकरचनाविधिं च विलिख्य पुस्तकस्य अस्य शोभां वर्धितवन्तः, अतः तेभ्यः हार्दाः कृतज्ञताः समर्प्यन्ते।

वस्तुतः प्रमाणपत्रदृष्ट्या अहं पूर्वं वैयाकरणः (व्याकरणस्य अध्येता न तु वेत्ता) ततः परं नैयायिकः (न्यायाध्येता) अस्मि, परं

समाजे नैयायिकत्वेन अहं ज्ञाये। अत्र येषां गुरूणां कृपा आशीः चास्ति ते अस्माकं परमपूज्याः, न्यायशास्त्रपारङ्गताः, नित्यमध्यापने रताः, शिष्यवत्सलाः श्रीमन्तः वशिष्ठत्रिपाठिगुरवः अपि अस्मिन् प्रसङ्गे स्मर्यन्ते।

पितृचरणानां सत्सङ्कल्पेन, तपसा, विशिष्टेन स्नेहेन च मया संस्कृताध्ययनरूपं सौभाग्यं लब्धम् अतः तौ पूज्यौ मातापितरौ (श्रीडानिश्वरपाण्डेयः श्रीमतीसरस्वतीपाण्डेया इति सुनामधेयौ) अत्र स्मर्येते तथैव मम सहचारिण्याः श्रीमत्या गौरीपाण्डेयायाः अपि अस्मिन् कार्ये महान् सहयोगः अस्ति अतः सापि स्मर्यते। लेखनम् अपेक्षयापि सम्पादनमतीव कठिनं कार्यं वर्तते। तत्कार्यं कर्तुं मम प्रार्थनां स्वीकृतवन्तः अस्मत्प्रेरकाः भागिनेयाः सदाचाराः अग्निहोत्रिणः श्रीमन्तः ज्ञानेन्द्रसापकोटामहोदयाः, कार्ष्णि-विद्याभवनस्य पूज्याः ब्रजचैतन्यस्वामिनः, व्याकरणविद्या-लयस्य आचार्यसतीशवर्याः, संस्कृतगङ्गायाः सचिवाः श्रीमन्तः सर्वज्ञभूषणवर्याः, श्रीत्रिलोचनवर्याः मुद्रकाः, टङ्कणे साहाय्यं कृतवान् रामचन्द्रः अन्ये सर्वे सहयोगिनश्च अत्र कृतज्ञतापुरस्सरं स्मर्यन्ते।

पुत्रस्य स्थितिकालतः अन्तकालपर्यन्तं पूर्णमनोयोगेन सर्वदृष्ट्या साहाय्यं कृतवन्तः श्रीनिवाससंस्कृतविद्यापीठस्य संस्थापकाः पूज्याः श्रीमन्तः गोविन्दाचार्यगुरवः, मातरः, विष्णुगुरवः, जीवनभ्रातरः, लक्ष्मीभगिन्यः, ओमप्रकाशस्वामिनः खगेन्द्रमहोदयः अन्ये च नाम्ना अनिर्दिष्टा बहवः सहयोगिनोऽपि अत्र कृतज्ञतापुरस्सरं स्मर्यन्ते।

पुण्यतिथिः<br>ज्येष्ठमासस्य कृष्णपक्षस्य दशमी।

पुत्रस्य आत्मशान्तिकामनया<br>टीकारामपाण्डेयः

# प्रस्तावना

भारतीयसंस्कृतौ 'वेद: नि:श्रेयसस्य मूलम्' इति मन्यते। तस्य पाद-भूतस्य छन्दस: ज्ञानं विना वेदे गति: न भवति। पाणिनीयशिक्षायां प्रतिपादिता 'छन्द: पादौ तु वेदस्य' इति उक्तिस्तु श्रुतपूर्वा एव स्यात्। छन्दश्शास्त्रं वेदपुरुपस्य पादस्थानीयं वर्तत इति तस्य अर्थ:। यथा पादविहीनपुरुपस्य गति: न भवति तथैव छन्दोज्ञानरहितस्यापि पुरुपस्य वेदे गति: न भवति। तज्ज्ञानार्थं तदङ्गभूतस्य छन्दश्शास्त्रस्य ज्ञानमतितराम् आवश्यकम्। प्रायेण सकलमपि वैदिकवाङ्मयं छन्दो-बद्धं वर्तते इति हेतो: कालान्तरे वेदापरपर्यायेणापि अयं शब्द: प्रयुक्त:। एतस्य छन्दस: उपादेयता न केवलं वेदे एव अपि तु लोकेऽपि वरीवर्ति। यत: लौकिकसाहित्यमपि प्राय: छन्दोवद्धमेव वर्तते। तस्य लयबद्धतया उच्चारणार्थं तथा च समीचीनतया अर्थाव-गमनार्थं छन्दश्शास्त्रस्य नितरामावश्यकता वर्तत एव।

वेदमन्त्रेपु प्रयुक्तं छन्द: वैदिकच्छन्द: रामायणमहाभारतादिषु प्रयुक्तं छन्द: लौकिकच्छन्द: इत्युच्यते। यद्यपि लौकिकच्छन्दसाम् उद्भव: वैदिकच्छन्दोभ्य: एव जात: तथापि उभयत्र महान् भेद: अस्त्येव। वैदिकच्छन्द: पूर्णरूपेग स्वरसंगीताधारितं वर्तते तत्र च अक्षरगणनाया: प्राधान्यं भवति। तन्नाम वर्णानां संख्याया: प्राधान्यं भवति। तत्र अक्षरस्वरूपै: ह्रस्वदीर्घप्लुतै: लघुगुरुभ्यां च कश्चनापि प्रभाव: न भवति। परं लौकिकच्छन्दांसि वर्णसङ्गीताधारितानि वर्तन्ते। अत्र वर्णानाम् उच्चारणस्य अधिकं महत्त्वं भवति। तथा च अत्र लघुगुरुक्रमेण एव वर्णा व्यवस्थाप्यन्ते। अस्या व्यवस्थाया: कारणेनैव लौकिकच्छन्द:सु सुश्राव्यता माधुर्यं च भवति येन विषय: शीघ्रं हृदयङ्गम: भवति। यस्य कस्यापि भावस्य पद्यरूपेण प्रकटनेन तस्यां भापायां लालित्यम् आयाति।

'ईशान: सर्वविद्यानाम्' इति भगवत: महादेवस्य विपये प्रसिद्धि: अस्ति। अत: अस्य शास्त्रस्यापि प्रथम: आचार्य: आशुतोप:

भगवान् शङ्करः एव। परन्तु छन्दोविषयान् व्यवस्थितरूपेण सूत्ररूपेण समग्ररूपेण च प्रतिपादितवान् आचार्यः पिङ्गलः छन्दश्शास्त्रप्रणेता मन्यते। अस्य छन्दःशास्त्रस्य उत्पत्तिविषये परम्पराविषये च समय-निर्धारणं सर्वथा अशक्यम् अस्ति। तथापि यादवप्रकाशकृते पिङ्गल-सूत्रभाष्ये (अन्तिमसूत्रभाष्ये) छन्दश्शास्त्रस्य परम्परायाः ज्ञानम् इत्थं प्राप्यते—

छन्दोज्ञानमिदं भवाद् भगवतो लेभे सुराणां गुरुः
तस्माद् दुश्च्यवनस्ततोऽसुरगुरुर्माण्डव्यनामा ततः।
माण्डव्यादपि सैतवस्तत ऋषिर्यास्कस्ततः पिङ्गलः
तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः क्रमात्॥

छदि संवरणे, छद संवरणे, छद अपवारणे, छदि आह्लादने, चदि आह्लादे इत्येतैः धातुभिः निष्पन्नः भवति अयं छन्दश्शब्दः। छन्दः इति शब्दादेव छन्दः इति शब्दस्य निष्पत्तिः इति वैदिकच्छन्दोमीमांसायां स्कन्दस्वामिना प्रतिपादितं वर्तते। अस्य छन्दश्शब्दस्य लक्षणानि प्रयोजनानि च यथा—

## छन्दोलक्षणानि ( छन्दश्शब्दार्थः )

१. चित्ताह्लादजनकं छन्दः

२. छन्दयति आह्लादयति इति छन्दः (अनेन मानवमनसः रञ्जनं भवतीति हेतोः आह्लादनमर्थः)

३. छादयन्ति वैदिकवाङ्मयं छन्दांसि पापात्कर्मणः

४. छन्दांसि छादनात्। ( यास्ककृतनिरुक्तम् )

५. छन्दः पद्ये च वेदे च स्वैराचाराभिलापयोः ( मेदिनीकोशः )

८. छन्दः पद्ये अभिलापे च ( अमरः )

९. छन्दयति संवृणोति भावान् इति छन्दः

१०. यदक्षरपरिमाणं तच्छन्दः, मात्राक्षरसंख्यानियता वाक् छन्दः

११. येन केनापि अक्षरेण यया कया च मात्रया नियतानामवयवविशेषाणां सन्निवेशेन कृता मर्यादा छन्दः। ततो जातिवृत्ताख्या मर्यादा छन्दः इत्युच्यते।

## छन्दःप्रयोजनानि

श्रुत्यादिषु यथा—

१. यो ह वा अविदित्वार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पत्यते प्र वा मीयते पापीयान् भवति, तस्मादेतानि मन्त्रे मन्त्रे विद्यात्।

२. अर्थेप्सवः ऋषयो देवताश्छन्दोभिरुपाधावन्।

३. अन्नपुत्रादिमोक्षान्तं फलमात्माधीनं कर्तुमिच्छन्तो मधुच्छन्दःप्रभृतयः संवननान्ता ऋषयो देवताः सूक्तहविर्भागिनीश्छन्दोभिर्गायत्र्यादिभिरुपायभूतैस्तद्युक्तमन्त्रैर्वा 'अर्थस्य प्राप्तावयमेवोपाय इति दृढसंकल्पाः' श्रद्धया गच्छन् इति हि तदर्थमाह षड्गुरुशिष्योऽपि। तस्मादन्नपुत्रादिमोक्षान्तफलसाधनत्वादस्ति प्रयोजनं छन्दःशास्त्रस्य।

४. गायत्रेण च्छन्दसा त्वा छादयामि त्रैष्टुभेन च्छन्दसा त्वा छादयामि जागतेन च्छन्दसा त्वा छादयामि त्वा छादयामि इति ततश्च छन्दसामेषां रक्षानुकूलसंवरणसाधनत्वादस्ति प्रयोजनं छन्दश्शास्त्रस्य।

५. छन्दांसि गायत्र्यादीनि एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीयं यातयामं भवति। अथान्तरा श्वगर्त्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्। अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा वा तत्फलेन युज्यते। (कात्यायनसर्वानुक्रमसूत्रे)

६. छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणः यस्यां

कस्याञ्चिद् दिशि कामयते। (आरण्यकम्)

७. प्रजापतिरग्निं चिनुते स क्षुरयाविर्भूत्वा तिष्ठत् तं देवा बिभ्यतोपायन्। ते छन्दोभिरात्मानं छादयित्वोपायन् तच्छन्दसां छन्दस्त्वम्। तस्माच्चीयमानाग्निसन्तापस्य छादकत्वाच्छन्द- स्त्वमित्यस्ति प्रयोजनं छन्दश्शास्त्रस्य।

८. देवा वै मृत्योर्विभ्युस्त्रयीं विद्यां प्राविशन्। ते छन्दोभि-रात्मानमाच्छादयन्। यदोभिराच्छादयंस्तच्छन्दसां छन्दस्त्वम्। (छान्दोग्योपनिषद्) तस्मादपमृत्युं वारयतीति छन्दः इत्युच्यते। ततोऽस्ति प्रयोजनं छन्दश्शास्त्रस्य।

९. अथ पुरा असुरैः पराभूताः सुरा यदेभिर्गायत्र्यादिभिः स्वमात्मानं प्रच्छाद्य पुनस्तान् जिग्युस्तच्छन्दसां छन्दस्त्वमिति। (वृद्धपराशरः) वृद्धपराशराद्युक्तेश्छन्दः-संवृतशरीरस्य शत्रुपरिभावकत्वं विजयशालित्वं च संसिद्धं भवतीत्यस्ति प्रयोजनं छन्दश्शास्त्रस्य।

स्मृत्यादिषु यथा—

मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान् ऋषीन्।
कृत्तद्धितादींश्चाज्ञात्वा यजन्तो यागकण्टकाः॥१॥

अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च।
योऽध्यापयेद् जपेद्वापि पापीयान् जायते तु सः॥२॥

ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते॥३॥

तस्मात् सन्त्येव भूयांसि छन्दश्शास्त्रस्य प्रयोजनानि। तद्विज्ञानमन्तरेण चायं यज्ञवेदो निर्वीयः यातयामो भवति, तस्मादस्ति यज्ञवेदोपकारकत्वं छन्दश्शास्त्रस्य।

विदुषामनुचरः

टीकारामपाण्डेयः

# विषयानुक्रमणिका



●

## संपादकीय-निवेदनम्

मोमुद्यते मे चेतो निवेदयद् आचार्येण टीकारामेण लिखितां छन्दः-प्रवेशिकामिमाम्। अस्यां कृतौ लौकिकच्छन्दसां वैदिकच्छन्दसां च प्रसिद्धानां सामञ्जस्येन निवेशो वर्तते। विशेपतो वैदिकच्छन्दसाममि लौकिकच्छन्दस्सु निदर्शनं सोदाहरणं दर्शनीयतां भजते। पारिभाषिक-पदव्याख्यानं छन्दो विपये प्रवेशयति जिज्ञासून्। छन्दोनिर्माणपद्धति-रपि छन्दोनिर्माणप्रविविक्षूणां महत उपकाराय सम्पत्स्यते।

इति निवेदयति, विद्वद्गणचरणरजोगणरमणो—
ज्ञानेन्द्रसापकोटा

॥ ॐ ॥

श्रीगणेशाय नमः

# छन्दःप्रवेशिका

## अथ प्रथमोऽध्यायः

### मङ्गलाचरणम्

प्रणम्य मातापितरौ गुरूँश्छन्दस्सु निष्ठितान्।
शिवायार्पयते टीकारामः छन्दःप्रवेशिकाम्॥

### ( पारिभाषिकशब्दपरिचयः )

शिवा—प्रत्येकमपि शास्त्रे केचन पारिभाषिकाः शब्दाः भवन्ति येषाम् अवगमनं विना तत्तच्छास्त्रेषु प्रवेशः न शक्यते, यथा न्यायशास्त्रे 'अनुयोगिता, प्रतियोगिता, अवच्छेदकः....' इत्यादयः। व्याकरणशास्त्रे 'इत्, पदम्, सवर्णः, उपधा....' इत्यादयः। एवमेव छन्दश्शास्त्रेऽपि 'लघुः, गुरुः, चिह्नम्...' इत्यादयः अनेके पारिभाषिकाः शब्दाः सन्ति। तेषु केचन प्रसिद्धाः अत्र विव्रियन्ते।

### पद्यम्

शिवा—'पदं चरणम्, तदर्हतीति पद्यम्' इदं च पद्यं वृत्तं जातिरिति भेदेन द्विविधं भवति। उक्तञ्च छन्दोमञ्जर्याम्—पद्यं चतुष्पदी इति। चतुर्णां पदानां (चरणानाम्) समाहारः चतुष्पदी, (समाहारद्विगुः)। प्रत्येकं पद्यस्य चत्वारः पादाः भवन्ति। यथा प्रसिद्धमेकं पद्यं स्वीकुर्मः—

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देव देव॥

अत्र—

त्वमेव माता च पिता त्वमेव (प्रथमः पादः)

त्वमेव बन्धुश्च सखा त्वमेव (द्वितीयः पादः)

त्वमेव विद्या द्रविणं त्वमेव (तृतीयः पादः)

त्वमेव सर्वं मम देव देव (चतुर्थः पादः)

एवमेव प्रतिपद्यम् अवगन्तव्यम्।

## पद्यभेदाः

शिवा—एतच्च चतुष्पादेन समन्वितं पद्यं वृत्तं जातिरिति द्विविधं भवति। यथोक्तं छन्दोमञ्जर्यां तच्च वृत्तं जातिरिति द्विधेति। तत्रापि वृत्तम् अक्षरनियन्त्रितं भवति अर्थात्तत्र निश्चितसंख्यकाः निर्धारिताश्च वर्णाः भवन्ति। यथोपेन्द्रवज्रायुतं पद्यमत्र निर्दिष्टम्। अत्र प्रतिपद्यमेकादशाक्षराणि भवेयुः तथा च उपेन्द्रवज्रा जत-जास्ततो गौ इति लक्षणोक्तक्रमेण वर्णाः स्युरिति नियमः वर्तते। अतः इदं पद्यम् अक्षरनियन्त्रितमस्ति। इदं वार्णिकं वृत्तमित्युच्यते।

जातिस्तु मात्राभिर्नियन्त्रिता भवति अर्थात्तत्र निश्चितसंख्यकाः मात्राः भवन्ति। यथा आर्यादिषु मात्रिकवृत्तेषु। तद्यथा यत्र प्रथमे तृतीये च पादे द्वादश मात्राः, द्वितीये अष्टादश, चतुर्थे पादे च पञ्च-दश मात्राः सन्ति सा आर्या भवति इति नियमः वर्तते। असौ आर्या-जातिः मात्राभिर्नियन्त्रितेति स्पष्टं दृश्यते। तदोक्तं वृत्तमञ्जर्याम्—

अक्षरैर्गणना यत्र तद्वृत्तमिति कथ्यते।
मात्राभिर्गणना यत्र सा जातिरभिधीयते॥

अर्थात्—यत्र अक्षरैः गणना भवति तद् वृत्तमिति कथ्यते। एवञ्च मात्राभिः यत्र गणना भवति सा जातिः अभिधीयते।

एवमेव छन्दोमञ्जर्यामपि अभिहितं वृत्तमक्षरसंख्यातं जाति-र्मात्रा कृता भवेदिति।

## वृत्तभेदाः

**शिवा**—उपरि पद्यं चतुष्पदीत्यनेन पद्यस्य स्वरूपं, तच्च वृत्तं जातिरिति द्विधेत्यनेन वृत्तजातिरूपाभ्यां पद्यस्य द्वैविध्यं तथा च वृत्तम् अक्षरसंख्यातं जातिर्मात्राकृता भवेदित्यनेन जातिवृत्तयोः स्वरूपं वर्णितम्। साम्प्रतं तयोः अन्यतमस्य वृत्तस्य भेदाः विव्रियन्ते। तच्च वृत्तं समम्, अर्धसमम् विषमञ्चेति भेदेन त्रिधा भवति। यथोक्तं छन्दोमञ्जर्यां **सममर्धसमं वृत्तं विषमञ्चेति तत्त्रिधेति।**

**समवृत्तम्**—चतुर्ष्वपि पादेषु यदि समानरूपेण लक्षणं संघटते तर्हि समवृत्तं भवति। यथा उपेन्द्रवज्रावृत्तयुक्ते पूर्वोक्ते त्वमेव माता च पिता त्वमेवेति पद्ये प्रतिपादम् एकादशाक्षराणि सन्ति। तथा च तत्र प्रतिपादमपि उपेन्द्रवज्रायाः लक्षणं (उपेन्द्रवज्रा जतजास्ततो गौ) समानरूपेण संघटते। अतः समानचरणचतुष्टयाद् इदम् उपेन्द्र-वज्रावृत्तं समवृत्तं कथ्यते। अस्य वृत्तस्य लक्षणं यथा वृत्तरत्नाकरे—

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते॥

**अर्थात्**—यस्य वृत्तस्य चत्वारः अपि अङ्घ्रयः (पादाः) तुल्येन लक्षणेन लक्षिताः (युक्ताः) सन्ति तच्छन्दःशास्त्रविशारदाः समं वृत्तं वदन्ति।

**विशेषः**—एकाक्षरात्पादादारभ्य एकैकाक्षरवर्धितपादैः षड्विं-शत्यक्षराणि यावत्समवृत्तं प्रोच्यते। यथोक्तं छन्दोविदाचार्येण गङ्गा-दासेन छन्दोमञ्जर्याम्—

आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्धितैः।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गतम्॥

उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्विका।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च॥

त्रिष्टुप् च जगती चैव तथातिजगती मता।
शक्वरी सातिपूर्वा स्यादष्ट्यत्यष्टी तथा स्मृते॥

धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।
विकृतिः संकृतिश्चैव तथातिकृतिरुत्कृतिः॥

**अर्थात्**—एकाक्षरं पादम् आरभ्य एकैकेन अक्षरेण वर्धितैः पादैः छन्दः उक्थादिसंज्ञकं भवति, तच्च षड्विंशत्यक्षरपादपर्यन्तं वृद्धिं गच्छति। क्रमेण तेषां नामानि यथा—उक्था, अत्युक्था, मध्या, सुप्रतिष्ठा, गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती, अतिजगती, शक्वरी, अतिशक्वरी, अष्टिः, अत्यष्टिः, धृतिः, अतिधृतिः, कृतिः, प्रकृतिः, आकृतिः, विकृतिः, संकृतिः, अतिकृतिः, उत्कृतिः इति।

तृतीयेऽध्याये एतेषां स्थूलरूपेण परिचयो भविष्यति।

**अर्धसमवृत्तम्**—यदि प्रथमपादः तृतीयपादवत्स्याच्चतुर्थपादश्च द्वितीयपादवद् भवेत् तर्हि अर्धसमवृत्तं भवति। वियोगिनीत्यादीनि अस्य उदाहरणानि। अस्य वृत्तस्य लक्षणं यथा वृत्तरत्नाकरे—

प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।
द्वितीयस्तुर्यवद् वृत्तं तदर्धसममुच्यते॥

**अर्थात्**—यस्य वृत्तस्य तृतीयश्चरणः प्रथमचरणसमानः, द्वितीयः च चतुर्थसमानः यदि स्यात्तर्हि तद् वृत्तम् अर्धसमम् उच्यते।

**विषमवृत्तम्**—यस्य वृत्तस्य चत्वारोऽपि पादाः यदि भिन्न-भिन्नलक्षणैः युक्ताः स्युस्तर्हि तद् विषमवृत्तं भवति। उक्तञ्च छन्दोमञ्जर्यां भिन्नचिह्नचतुष्पादं विषमं परिकीर्तितमिति। यथा—हरिणप्लुता पुष्पिताग्रा इत्यादीनि उदाहरणानि। वृत्तरत्नाकरे तु विषमवृत्तस्य लक्षणम् इत्थम् उक्तम्—

यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्।
तदाहुर्विषमं वृत्तं छन्दश्शास्त्रविशारदाः॥

**अर्थात्**—यस्य वृत्तस्य चत्वारोऽपि पादाः पृथक्लक्षणवन्तः स्युः तद्विषमं वृत्तं भवति।

**अवधेयम्**—अत्र परिचायितयोः विषमवृत्त-अर्धसमवृत्तयोः लक्षणसमन्वयपुरस्सरं संक्षेपेण विवरणं चतुर्थेऽध्याये कृतं विद्यते, जिज्ञासवः तत्रैव पश्यन्तु।

लौकिकच्छन्दसां सारः—




**यतिः**

**शिवा**—मानवसामर्थ्यं सीमितं भवतीति हेतोः मानवः शक्तिमतिक्रम्य कार्यं कर्तुं न पारयति। परं कठिनमपि कार्यं यदि सः विश्रामपूर्वकं करोति तर्हि सः साफल्यं प्राप्नोति। एवमेव श्लोकानामपि एकश्वासेन कथने प्रायेण कष्टम् अनुभूयते, कदाचित् मधुरतापि नश्यति, अतः जिह्वायै मध्ये विश्रान्तिः कल्पनीया भवति, एषा विश्रान्तिः एव 'यतिः, विरतिः, विरामः, विच्छेदः' इत्यादिभिः पदैः बोध्यते। यतेः सामान्यलक्षणं वर्तते **'यतिर्जिह्वेष्टविश्रान्तिः'** इति। छन्दोमञ्जर्यां यतेः वर्णनं सुन्दररीत्या कृतं विलसति। तद्यथा—

> **यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते।**
> **सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया॥**

**अर्थात्**—जिह्वेष्टविश्रामस्थानं जिह्वायाः रसनायाः इष्टम् अभीप्सितं विश्रामस्थानं कविभिः वृत्तविशेषज्ञैः यतिः इत्युच्यते। एषा एव यतिः निजेच्छया वक्तुः कामनया विश्राम-विरति-विच्छेद-विरामाद्यैः शब्दैः वाच्या वक्तव्या।

अत्र काव्यादर्शकारः—

> **श्लोकेषु नियतस्थाने पदच्छेदं यतिं विदुः।**
> **तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा॥**

**अर्थात्**—श्लोकेषु निश्चिते स्थाने पदच्छेदः एव यतिर्बुध्यते जनैः। यतिरहितं यतिभ्रष्टं श्रवणाय उत्तेजनात्मकं भवति, अर्थात् श्रुतिकटुर्भवति।

अन्यः कश्चन छन्दोविदाचार्यः यतिम् इत्थं प्रतिपादयति—

एवं यथा यथोद्वेगः सुधियां नोपजायते।
तथा तथा मधुरतानिमित्तं यतिरिष्यते॥

अस्यार्थस्तु स्पष्टः एव।

**यतिविषये कानिचन वचनानि—**

१. यतिर्जिह्वेष्टविश्रान्तिः।

२. नियतः पदविच्छेदो यतिरित्यभिधीयते। (नाट्यशास्त्रम्)

३. श्लोकेपु नियतस्थाने पदच्छेदं यतिं विदुः।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा॥
(आचार्यदण्डी काव्यादर्शे)

४. श्वासविच्छित्तिरेव विरामस्थलम्। (भरतमुनिः)

५. सरसः पदगतरसापेक्षी विराम एव यतिस्थलम्। (यास्कः)

६. यतिः पदच्छेदः।

**यतिस्थानम्—**

**शिवा**—श्लोकेपु नियतस्थाने पदच्छेदः एव यतिर्बुध्यते जनैः। सा यतिः कुत्र भवेदिति विपये क्वचिच्छन्दोलक्षणेषु सङ्केतः कृतः भवति। तत्र अब्धि-भूत-रस-सूर्यादयः लोके प्रसिद्धाः शब्दाः उल्लिखिताः भवन्ति। एते शब्दाः लोके यावन्तः प्रसिद्धाः सन्ति, तत्संख्याके वर्णे यतिः चिन्तनीया भवति। उक्तञ्च 'अब्धि भूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः' इति। यथा लोके अब्धयः चत्वारः, सूर्याः द्वादश, रसाः पड्, सूर्याः च द्वादश प्रसिद्धाः सन्ति। येपु लक्षणेपु एते शब्दाः प्रयुक्ताः सन्ति तत्र तत्संख्याके यतिः स्वीकरणीया। यथा 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति शार्दूलविक्रीडितवृत्तस्य लक्षणं वर्तते, अस्मिन् लक्षणे अश्व-सूर्य-शब्दौ स्तः। लोके सप्त अश्वाः, द्वादश सूर्याश्च प्रसिद्धाः सन्ति अतः अस्य लक्षणस्य उच्चारणे एतल्लक्षणयुतानां श्लोकानाम् उच्चारणे वा द्वादशे सप्तमे च यतिं स्वीकुर्मः। छन्दो-लक्षणेपु एवंविधाः लोके प्रसिद्धाः संख्याबोधकाः शब्दाः एकतः

आरभ्य त्रयोविंशतिं यावत् संख्याः सूचयन्तः विद्यन्ते। तेषु व्यापक-रूपेण प्रयुक्ताः काश्चन संज्ञाः यथा—

| संख्या | संज्ञा | संख्या | संज्ञा |
|---|---|---|---|
| १ | ईश्वरः, चन्द्रः | ७ | अश्वः, मुनिः |
| २ | नेत्रम्, पक्षः | ८ | वसुः, नागः |
| ३ | गुणः, अग्निः | ९ | ग्रहः, रन्ध्रः |
| ४ | वेदः, समुद्रः | १० | दिशा, दोषः |
| ५ | भूतः, बाणः | ११ | रुद्रः, ईशः |
| ६ | रसः, शास्त्रम् | १२ | सूर्यः |

यत्र च लक्षणेषु यतिबोधकं पदं निर्दिष्टं नास्ति तत्र पादान्ते विशिष्य श्लोकार्धे यतिश्चिन्तनीया। उक्तमपि—यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः इति।

कल्पते विशेषः—पदभङ्गे सति यतिः न करणीया, तत्र यतिः दोषाय कल्प्यते, तन्नाम तत्र यतिभङ्गदोषः भवति, तथा सति अर्थानुसन्धाने प्रतिबन्धः भवति। काव्येषु अर्थानुसन्धानं प्रधानं भवति, अतः यतिभङ्गरूपदोषः न सह्यते एव। यथा—

नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे।

अनुष्टुप्छन्दसः इदं पद्यम्। अत्र अष्टमेऽक्षरे पादः समाप्यते, यदि 'यतिः सर्वत्र पादान्ते' इति आंशिकनियमं मनसि निधायात्र यतिः स्वीक्रियते तर्हि पदभङ्गरूपः दोषः भवतीत्यतः एतादृशस्थले यतिः न स्वीकरणीया।

## लघुः गुरुश्च

शिवा—यथा संसारसागरे यथोचिततरणार्थं लोके मार्गदर्शकस्य गुरोः आवश्यकता अनुभूयते तथैव छन्दस्शास्त्ररूपे सागरे तरणाय अपि गुरोः आवश्यकता भवति, अतः छन्दस्शास्त्रे मस्त्रिगुरुः, वक्ररेखा गुरोः चिह्नम्, गुरुरेको गकारस्तु, आदिमध्यावसानेषु भजसा यान्ति गौरवम् इत्यादिभिः वचनैः प्रतिपाद्यमानः गुरुशब्दः वर्ण्यते—

> सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
> वा पादान्ते त्वसौ वक्रो ज्ञेयोऽन्यो मातृक ऋजुः॥

अर्थात्—सानुस्वारः विसर्गान्तः दीर्घः युक्तपरः च यः ह्रस्वः वर्णः सः गुरुसंज्ञकः भवति। पादान्ते तु असौ ह्रस्वः वर्णः गुरुः ज्ञेयः, अन्यः उक्ताद् भिन्नस्तु ह्रस्वः वर्णः ऋजुमातृकः ज्ञेयः।

क्रमेण उदाहरणानि—अनुस्वारेण युक्तः ह्रस्वः वर्णः गुरुसंज्ञकः भवति, यथा **संस्कृतम्** इत्यत्र सकारोत्तरवर्ती सानुस्वारः अकारः। विसर्गान्तः गुरुसंज्ञकः भवतीत्यस्य **रामः** इत्युदाहरणम्। अत्र मकारोत्तरवर्ती अकारः विसर्गेण युक्तः अस्तीति कारणेन गुरुसंज्ञकः भवति। दीर्घः गुरुः भवतीति सामान्यमेव। यथा—रामः इत्यत्र रेफोत्तरवर्ती आकारः। संयोगपूर्वस्य उदाहरणं यथा—**कृष्णः** इति। अत्र ष्ण इति संयोगे परे तस्मात् पूर्ववर्ती ह्रस्वः अपि ऋकारः स्वरः गुरुसंज्ञको वर्तते। एवञ्च पादान्ते स्थितः लघुवर्णः विभापया गुरुः भवति। तन्नाम लघुत्वे अपेक्षिते लघुः गुरुत्वे अपेक्षिते च गुरुः भवति इत्यर्थः। इयं वैकल्पिकी व्यवस्था जातौ (मात्रिकवृत्तेषु) द्वितीयचतुर्थपादयोरेव। वृत्ते (वार्णिकवृत्तेषु) तु चतुर्ष्वपि पादेषु भवितुम् अर्हति।

क्वचित् गुरोः विवरणम् इत्थं प्राप्यते—

> सानुस्वारैश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।
> वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा॥

अर्थस्तु समानः एव।

**अवधेयम्—**

- विसर्गान्तः इति कथनं जिह्वामूलीयोध्मानयोरपि उपलक्षणम्। अत्र वृत्तरत्नाकरस्य टीकाकारः—'युक्तपरश्चेति व्यञ्जनोपध्मानीय-जिह्वामूलीयपराणामुपलक्षणम्' इत्याह।
- लघुगुरुविपये पाणिनीयव्याकरणे त्रीणि सूत्राणि वर्णितानि सन्ति। तत्र प्रथमं सूत्रं 'ह्रस्वं लघु' इति। अस्य तात्पर्यन्तु ह्रस्वम् अक्षरं लघुसंज्ञकं स्यादिति। सर्वेऽपि अ, इ, उ, ऋ, लृ इत्येते

ह्रस्वाः वर्णाः लघुसंज्ञकाः भवन्तीति तु सामान्यनियमः। परन्तु 'संयोगे गुरु' इत्यनेन द्वितीयसूत्रेण ह्रस्वाः अपि अ, इ, उ, ऋ, लृ एते वर्णाः गुरुसंज्ञकाः भवन्ति। संयोगे परे ह्रस्वं गुरुसंज्ञकं स्यादिति सूत्रार्थः। दीर्घं चेति तृतीयसूत्रेण आ ई ऊ ॠ ए ओ ऐ औ इत्येतेषां गुरुसंज्ञा भवति। अत्र छन्दश्शास्त्रे व्याकरणसूत्राद् भिन्ना अपि केचन नियमाः गुरुविषये उच्यन्ते यथा—अनुस्वारेण विसर्गेण च युक्ताः वर्णाः गुरुसंज्ञकाः भवन्ति। एवञ्च पादान्तगः अपि ह्रस्वः वर्णः विकल्पेन गुरुः मन्यते।

◆ यदुक्तं संयोगपूर्वं ह्रस्वं गुरु भवतीति तद्यदि ह्रप्रग्रभ्रादि-रूपाद्रेफान्तसंयोगात् पूर्वं भवेत्तदा यथेच्छमेकमात्रवद् उच्चारणाल्ल-घुत्वेन द्विमात्रवदुच्चारणाद् गुरुत्वेन वा व्यवहार्यम्। तन्नाम एतेभ्यः प्राग्यदि ह्रस्ववर्णः स्यात्तर्हि लघुत्वेन, दीर्घवर्णः प्लुतवर्णः वा स्यात्तर्हि गुरुत्वेन व्यवहारः कर्तव्यः।

## चिह्नम्

**शिवा**—उपरि लघुगुरुविषये विवरणं कृतम्। तयोर्लघुगुर्वोः बोधः येषां द्वारा भवति ते आकृतिविशेषाः एव अत्र चिह्नपदेन ज्ञेयाः। तद्यथा—'ऽ' इदं गुरोः चिह्नं '।' इदं च लघोः चिह्नमिति व्यवस्था। दक्षिणप्रदेशेषु गुरोः चिह्नम् 'U' एतादृशम् अपि दृश्यते। इदं च जनाश्रयद्वारा स्वीकृतं गुरुचिह्नम् इति केनचित् व्याख्यात्रा प्रोच्यते। **'वक्ररेखा गुरोश्चिह्नं सरला तु लघोस्तथा'** इत्युक्तिः प्रसिद्धा वर्तते चिह्नस्वरूपनिर्धारणविषये। गुरोश्चिह्नं वक्ररेखा, लघोश्चिह्नं सरला इत्येव अस्याः अर्थः। एवमेव गुरोः बोधनाय गकारः लघोः बोधनाय च लकारः प्रयुज्यते लक्षणेषु। इममेव विषयं छन्दो-मञ्जरीकारः इत्थं प्रतिपादयति—

**गुरुरेको गकारस्तु लकारो लघुरेककः।**
**क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा॥**

**अर्थात्**—यस्मिन् लक्षणे एकः गकारः प्रयुक्तः भवति तेन गुरुसंज्ञकः ज्ञेयः, तथैव यत्र लक्षणे एकः लकारः प्रयुक्तः अस्ति

तेन लघुसंज्ञकः वर्णः बोद्धव्यः। एतेषां लघुगुरूणां रेखाभिः चिह्न-विशेषैः संस्थानम् आकृतिः क्रमेण दर्श्यते।

## गणाः

शिवा—यथा लोके धनव्ययनिमित्तं रूप्यकाणाम् एक-द्वि-पञ्च-दश-विंशति-पञ्चाशच्छतपञ्चशतादिभेदेन विभागः कल्पितः अस्ति, तथैव छन्दश्शास्त्रेऽपि शब्दानां व्ययनिमित्तं त्रयाणां त्रयाणाम् अक्षराणानाम् अष्टौ वार्णिकगणाः चतसृणां मात्राणां पञ्च मात्रिकाः गणाः आहत्य त्रयोदश गणाः चिन्तिताः सन्ति। भरतपिङ्गलादीनां सर्वेषां मते वार्णिका अष्टावेव गणाः सन्ति, परं जनाश्रयकृतच्छन्दोविचित्याम् अष्टादशानां वार्णिकगणानां निरूपणं प्राप्यते। परन्तु तेन निर्दिष्टाः दश अपि गणाः पिङ्गलाचार्येण स्वीकृतेषु अष्टसु एव अन्तर्भवन्ति इति हेतोः ते गणाः अत्र न विव्रियन्ते। पद्यरचनाप्रसङ्गे एतेषां गणानाम् अत्यन्तम् आवश्यकता भवति इति तु न विस्मरणीयम्।

**वर्णगणाः**—वार्णिकवृत्तेषु प्रयुज्यमानाः एव गणाः वर्णगणाः प्रोच्यन्ते। ते च यथा—यगणः मगणः तगणः रगणः भगणः नगणः सगणः। एतेषां गणानाम् अवबोधाय अधुना छन्दोलोके त्रयः मार्गाः प्रसिद्धाः सन्ति, वयं तान् त्रीन् अपि यथाक्रमं पश्यामः।

१) यमाताराजभानसलगाः इति सूत्ररूपेण प्रसिद्धमस्ति छन्दोवित्सु। अत्र यमाता मातारा ताराज राजभा जभान भानस नसल सलगा इति अष्टौ गणाः लघुः गुरुश्च सन्ति। वर्णव्यवस्थापि अत्र प्रोक्ता अस्तीति तु अस्य वैशिष्ट्यमेव। तद्यथा—यमाता (ISS) इत्यत्र प्रथमः वर्णः लघुसंज्ञकः द्वितीयतृतीयौ तु गुरुसंज्ञकौ वर्तेते इति स्पष्टं भवति। (एतेषां चिह्नानां विषये चिह्नविचारे स्पष्टरूपेण चर्चा विहिता वर्तते। स्पष्टज्ञानाय तत्रैव अवलोक्यताम्।) मातारा (SSS) इत्यत्र त्रयोऽपि वर्णाः गुरुसंज्ञकाः एव। ताराज (SSI) इत्यत्र प्रथमद्वितीयौ गुरुसंज्ञकौ वर्णौ तृतीयस्तु लघुसंज्ञकः वर्तते। एवमेव राजभा (SIS), जभान (ISI), भानस (SII), नसल (III), सलगा (IIS) इत्यत्रापि चिन्तनीयम्।

अस्य सारः—

| गणनाम | बोधकशब्दाः | चिह्नानि |
|---|---|---|
| यगणः | यमाता | ।ऽऽ |
| यगणः | मातारा | ऽऽऽ |
| तगणः | ताराज | ऽऽ। |
| रगणः | राजभा | ऽ।ऽ |
| जगणः | जभान | ।ऽ। |
| भगणः | भानस | ऽ।। |
| नगणः | नसल | ।।। |
| सगणः | सलगा | ।।ऽ |

२) छन्दःशास्त्रकोविदैः इतोऽपि सरला व्यवस्था पिङ्गलच्छन्दःसूत्रे प्रदत्ता वर्तते। तद्यथा—

आदिमध्यावसानेषु भजसा यान्ति गौरवम्।
यरता लाघवं यान्ति मनौ तु गुरुलाघवम्॥

अर्थात्—भगण-जगण-सगणाः यथासंख्यमादिमध्यावसानेषु गौरवं यान्ति, तन्नाम भगणः आदिगुरुः (ऽ।।), जगणः मध्यगुरुः (।ऽ।), सगणः अन्तगुरुः (।।ऽ) भवतीत्यर्थः। यगण-रगण-तगणास्तु आदिमध्यावसानेषु लाघवं यान्ति, तन्नाम यगणः आदिलघुः (।ऽऽ), रगणः मध्यलघुः (ऽ।ऽ), तगणः अन्तलघुः (ऽऽ।) भवति। मगणः सर्वगुरुः (ऽऽऽ), नगणः सर्वलघुः (।।।) च भवति।

३) तृतीयः पन्थाः एवं दृश्यते—

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥

अर्थात्—यस्मिन् गणे त्रयः गुरुवर्णाः (ऽऽऽ) स्युः सः मगणः, यत्र गणे त्रयः लघुवर्णाः (।।।) स्युः सः नगणः, यस्मिन् गणे आदिमः वर्णः गुरुः (ऽ।।) स्यात् सः भगणः, पुनः तदनन्तरं यस्मिन् गणे आदिमः वर्णः लघुः (।ऽऽ) स्यात् सः यगणः, यस्मिन् गणे मध्ये स्थितः वर्णः गुरुः (।ऽ।) स्यात् सः जगणः,

यस्मिन् गणे मध्यमः वर्णः लघुः (ऽ।ऽ) स्यात् स रगणः, यस्मिन् गणे अन्तिमः वर्णः गुरुः (।।ऽ) स्यात् सः सगणः तथा च यस्मिन् गणे यत्र अन्तिमवर्णः लघुः (ऽऽ।) स्यात् सः तगणः कथितः।

**जातिगणाः (मात्रागणाः)—**

यमाताराजभानसलगेत्यादिना, आदिमध्यावसानेत्यादिना, मस्त्रिगुरुस्त्रिलघुश्चेत्यादिना वा पद्यस्य वृत्तभेदगतान् त्रयाणां त्रयाणाम् अक्षराणानाम् अष्टौ गणान् निर्दिश्य क्रमप्राप्तायाः जातेः गणाः निर्दिश्यन्ते। क्षभजसहाः मात्रागणाः। क्षगणः, भगणः, जगणः, सगणः, हगणः इत्येते मात्रिकाः गणाः इत्यर्थः। सर्वत्र चतस्रः मात्राः भवेयुरिति नियमः। तेषु अक्षराणां न्यूनाधिक्येऽपि मात्राचतुष्ट्वं तन्त्रम्। तथा च भजसाः प्राग्वत् त्र्यक्षराः। क्षस्तु द्व्यक्षरः सर्वगुरुः। तथा हश्चतुरक्षरः सर्वलघुः। तदुक्तम्—

क्षगणो यदि च गुरु द्वौ हगणः स्याल्लघुचतुष्टयं यदि च।
भजसास्त्र्यक्षरकाः स्युर्यदि गुर्वादि गुरुमध्यगुर्वन्ताः॥

अयमेव विषयः छन्दोमञ्जर्याम् एवमुक्तमस्ति—

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः॥

**अर्थात्**—चतुर्मात्रायुताः सर्वगुरुः (ऽऽ), अन्तगुरुः (।।ऽ), मध्यगुरुः (।ऽ।), आदिगुरुः(ऽ।।) च इत्येते चत्वारः गणाः चतुर्भिः लघुभिः वर्णैः (।।।।) युक्तः पञ्चमः गणः आहत्य पञ्च गणाः आर्यादिषु मात्रिकवृत्तेषु संस्थिताः भवन्तीति ज्ञेयम्।

**अवधेयम्—**

अत्र सर्वगुरु-अन्तगुरु-मध्यगुरु-आदिगुरवः चतुर्मात्रायुताः चत्वारः गणाः चतुर्भिः लघुभिः वर्णैः युक्तश्च पञ्चमः गणः आहत्य पञ्च गणाः आर्यादिमात्रिकवृत्तेषु भवन्तीति उक्तम्, तथा च वार्णिकवृत्तेषु त्रयाणां त्रयाणाम् अक्षराणानाम् अष्टौ गणाः कल्पिताः सन्तीति पूर्वमेवोक्तम्। एते मात्रिकाः वार्णिकाः वा गणाः सर्वे युगपदेव एकत्र न भवन्ति अपितु तत्तल्लक्षणेषु निर्दिष्टाः निश्चित-संख्यकाः एव गणाः भवन्ति। यथा आर्यायाः लक्षणप्रसङ्गे लक्ष्मैः

तत् सप्तगणा...इत्यत्र आर्यायाः प्रथमे पूर्वार्धे सप्त गणाः अन्ते एकः गुरुः च इत्येषा आर्यायां गणव्यवस्था भवतीति वक्ष्यते। अस्मिन् लक्षणे पूर्वार्धे एव सप्त गणाः भवेयुरिति उक्तम्। एवमेव इन्द्रवज्रादिषु वार्णिकवृत्तेष्वपि यथा—स्यादिन्द्रवज्रा यदि तौ जगौ गः इत्यादिषु गणाः निर्धारिताः। निष्कर्षरूपेण इदमेव आयातं यत् यावन्तः गणाः लक्षणेन निर्दिष्टाः तावन्तः एव गणाः तत्तत्स्थानेषु भविष्यन्ति न तु युगपत् सर्वेऽपीति।

गणस्वामिनः तत्फलानि च—

शिवा—पद्यानां रचनाप्रसङ्गे कस्य गणस्य पूर्वं प्रयोगः कर्तव्यः? कस्य गणस्य किं फलम्? कस्य गणस्य स्वामी च कः? इत्यादीनां काव्यरसरसिकहृदयेषु समुत्पद्यमानां जिज्ञासानां समाधानाय प्रोच्यते—

मो भूमिः श्रियमातनोति य जलं वृद्धिं र चाग्निर्मृतम्,
सो वायुः परदेशगमने त व्योम शून्यं फलम्।
जः सूर्यो रुजमादधाति विपुलं भेन्दुर्यशो निर्मलम्,
नो नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः॥

अर्थात्—मगणस्य स्वामी भूमिः श्रिय विस्तारिका वर्तते। यगणस्य स्वामी जलं यच्च वृद्धिं करोति। रगणस्य स्वामी अग्निः विनाशकर्ता अस्ति। सगणस्य स्वामी वायुः तस्य फलं तु परदेशगमनम्। तगणस्य स्वामी आकाशः तस्य शून्यं फलम्। जगणस्य स्वामी सूर्यः रोगकारकः। भगणस्य स्वामी चन्द्रः तस्य फलं तु विपुलस्य निर्मलस्य च यशसः प्राप्तिः। नगणस्य स्वामी स्वर्गः फलं सुखम्।

छन्दोमञ्जर्यां वृत्तरत्नाकरस्य नारायणाख्यायां व्याख्यायां च गणः, गणस्वरूपम्, गणस्वामी, गणफलानि च किञ्चिदिव भिन्नप्रकारेण उक्तानि। तद्यथा—

मो भूमिस्त्रिगुरुः श्रियं दिशति यो वृद्धिं जलं चादिलो,
रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः।
तो व्योमान्तलघुर्धनापहरणं जोऽर्को रुजं मध्यगो,
भश्चन्द्रो यश उज्ज्वलं मुखगुरुर्नो नाक आयुस्त्रिलः॥

अस्य सारः—

| गणनाम | स्वरूपम् | देवता | फलम् |
|---|---|---|---|
| मगणः | ऽऽऽ | पृथ्वी | लक्ष्मीः |
| यगणः | ।ऽऽ | जलम् | वृद्धिः |
| रगणः | ऽ।ऽ | अग्निः | विनाशः |
| सगणः | ।।ऽ | वायुः | देशाटनम् |
| तगणः | ऽऽ। | व्योम | धनापहरणम् |
| जगणः | ।ऽ। | सूर्यः | रोगः |
| भगणः | ऽ।। | शशिः | यशः |
| नगणः | ।।। | स्वर्गः | सुखम् |

## छन्दांसि कति?

शिवा—छन्दसां संख्या इदमित्थन्तया वक्तुं न शक्यते यतः प्रस्तार-क्रमेण छन्दांसि कोटिशः भवन्ति। परन्तु लौकिकसंस्कृतकाव्यपर-म्परायाम् आदिकाव्यरामायणतः आरभ्य अद्य पर्यन्तं रचितेषु काव्येषु यावतां छन्दसां प्रयोगः प्रायेण जातः अस्ति तेषां संख्या छन्दोविदा आचार्यरामकिशोरमिश्रवर्येण स्वग्रन्थे उल्लिखिता वर्तते, तदनुसारेण इत्थं संख्या लभ्यते। 27 छन्दोलक्षणग्रन्थेषु 09 टीकासु च रचितानि 2046 छन्दसां लक्षणानि प्राप्यन्ते येषु प्रायेण 70 छन्दसां प्रयोगः काव्येषु प्राप्यते। एतेष्वपि 28 छन्दसामेव आधिक्येन काव्यजगति उपयोगः अभूत्। तानि च यथा—अनुष्टुप्, आर्या, इन्द्रवज्रा, उपेन्द्र-वज्रा, उपजातिः, रथोद्धता, वंशस्थम्, वसन्ततिलका, मालिनी, शिखरिणी, हरिणी, पृथ्वी, मन्दाक्रान्ता, शार्दूलविक्रीडितम्, स्रग्धरा, वैतालीयम् (वियोगिनी), उपगीत्यार्या, पुष्पिताग्रा, द्रुतविल- म्बितम्, प्रहर्षिणी, प्रमिताक्षरा, विलम्बिता (मञ्जुभाषिणी), उद्गता, रुचिरा, शालिनी, औपच्छन्दसिकः, स्वागता।

(इति प्रथमोऽध्यायः)

# अथ द्वितीयोऽध्यायः

## ( लक्षणसमन्वयः )

**अवधीयताम्—** अत्र

- काव्येषु आधिक्येन प्रयुक्तानां प्रतियोगिपरीक्षादृष्ट्या प्रसिद्धानां च आर्या, अनुष्टुप्, इन्द्रवज्रा, उपेन्द्रवज्रा, उपजातिः, शालिनी, वंशस्थम्, वसन्ततिलका, मालिनी, शिखरिणी मन्दाक्रान्ता, शार्दूल-विक्रीडितम्, स्रग्धरा इत्येतेषां त्रयोदशानां छन्दसां लक्षणानि, तेषाम् अर्थविवरणमुदाहरणेषु लक्षणसमन्वयः च भवति, तेषां सम्यगभ्या-साय पृथक्तया उदाहरणान्यपि दत्तानि सन्ति अस्मिन् अध्याये।

- अस्मिन् ग्रन्थे वक्ष्यमाणानां छन्दोलक्षणानां प्रथमोदाहरणरूपेण तत्तल्लक्षणमेव भविष्यति, ततः परमेव अन्यत् उदाहरणम्। तन्नाम लक्षणे प्रोक्तस्य नियमस्य समन्वयः प्रथमं तस्मिन्नेव लक्षणे भवति, तदनन्तरमेव अन्यस्मिन्नुदाहरणे इति विशेषः।

- वृत्त-जाति-भेदेन पद्यस्य द्वैविध्यं प्रथमेऽध्याये प्रतिपादितम्। तत्रैव अक्षरैर्नियन्त्रितं वृत्तं (वार्णिकं वृत्तम्) मात्राभिर्नियन्त्रिता च जातिः (मात्रिकं वृत्तम्) इत्यपि प्रोक्तम्। द्विविधान्यपि वृत्तानि तन्नाम मात्रिकवृत्तानि वार्णिकवृत्तानि च अत्र वर्ण्यन्ते। लाघवकारणेन प्रथमं तावत् मात्रिकवृत्तम् एव प्रोच्यते। तत्रापि आर्यायाः एव प्रसिद्धिरस्तीति कारणेन आर्यामात्रं वर्ण्यते। ततः परं वार्णिकानि वृत्तानि वर्णयिष्यन्ते।

## १. आर्या

**यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।**
**अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या॥**

**शिवा**—यस्याः (आर्यायाः) प्रथमे तृतीये च पादे यदि द्वादश मात्राः, द्वितीये पादे अष्टादश, चतुर्थके च पञ्चदश मात्राः स्युस्तर्हि सा आर्या भवतीत्यर्थः।

इदं मात्रिकं वृत्तं वर्तत इति हेतोः अत्र मात्राणां गणना कर्तव्या भविष्यति। लघ्वक्षरस्य (न तु ह्रस्वाक्षरमात्रस्य) एका मात्रा, गुरुवर्णस्य तु मात्राद्वयं गणनीयं भविष्यति। लक्षणमेव प्रथमम् उदाहरणं भवति इति स्पष्टीकृतमेव। अतः प्रथमं लक्षणे एव पश्यामस्तावत्। यस्याः पादे प्रथमे इति प्रथमः पादः द्वादशमात्रास्तथा तृतीयेऽपि इति द्वितीयः, अष्टादश द्वितीये इति तृतीयः, चतुर्थके पञ्चदश सार्या इति चतुर्थः पादः। अत्र एवं दृश्यताम्—

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि
ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या
ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । ऽ ऽ

अत्र लघुवर्णस्य एका मात्रा, गुरुवर्णस्य मात्राद्वयं च इति रीत्या यदि गणना क्रियते तर्हि लक्षणोक्तक्रमेण प्रथमतृतीयपादयोः द्वादश द्वादश (१२+१२) मात्राः, द्वितीयपादे अष्टादश(१८) मात्राः, चतुर्थ-पादे च चतुर्दश(१४) मात्राः प्राप्यन्ते। एवमेव मुख्ये उदाहरणेऽपि अवगम्यताम्। तद्यथा—

पञ्चदश

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः
ऽ ऽ । । ऽ ऽ ऽ । । । । ऽ ऽ । ऽ । ऽ ऽ ऽ

ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति
ऽ । । । ऽ । ऽ ऽ ऽ ऽ । ऽ । ऽ । ऽ । । ऽ

एवमेव सर्वत्र आर्यायाम् अवगन्तव्यम्। अस्याः इतराणि उदा-हरणानि यथा—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥

संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्॥

अतिपरिचयादवज्ञा संततगमनादनादरो भवति।
लोकः प्रयागवासी कूपे स्नानं समाचरति॥

**अवधेयम्—**

- वार्णिकवृत्तेभ्यः अष्टौ गणाः आर्यादिकेभ्यः मात्रिकवृत्तेभ्यः च चतुर्मात्रायुताः पञ्च गणाः भवन्तीति प्रथमेऽध्याये एव प्रोक्तम्। वार्णिकगणानाम् उपयोगः अग्रे दर्श्यते, अधुना मात्रिकगणानां समन्वयः दर्श्यते।

- अत्र प्रतिपादं गणव्यवस्था नास्ति प्रत्युत श्लोकार्धे इयं व्यवस्था वर्तते। प्रतिश्लोकार्धं सप्त गणाः (अत्र चतुर्मात्रात्मकाः गणाः भवन्तीति प्रोक्तमेव) अन्ते एकः गुरुश्च भवन्ति। अस्मिन् विषये इतोऽपि किञ्चित् विस्तरेण बोधनाय गङ्गादासप्रणीतायाः छन्दोमञ्जर्याः लक्षणानि उच्यन्ते। तद्यथा—

लक्ष्मै तत् सप्त गणा गोपेता भवति नेह विषमे जः।
षष्ठो जश्च नलघु वा प्रथमेऽर्धे नियतमार्यायाः॥१॥

षष्ठे द्वितीयलात् परकेन्ले मुखलाश्च सयतिपदनियमः।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥२॥

अर्थात्—आर्यायाः प्रथमेऽर्धे (पूर्वार्धे) चरमेऽर्धे (उत्तरार्धे) च भिन्नाः भिन्नाः नियमाः भवन्ति। उभयत्रापि सप्त गणाः अन्ते एकः गुरुश्चेति नियतरूपेण भवन्ति। चतुर्मात्राः सप्तगणाः अन्ते एकः गुरुः इत्येषा आर्यायां गणव्यवस्था भवति। अस्याम् आर्यायां विषमगणेषु (प्रथम-तृतीय-पञ्चम-सप्तम-गणेषु) जगणः (।ऽ।) न स्यात्तथा च षष्ठः गणः जगणः (।ऽ।) अथवा एकेन लघुना सह नगणः (।।।।) स्यात् अर्थात् षष्ठगणरूपेण जगणः अथवा चत्वारः लघुवर्णाः भवेयुः। षष्ठे गणे न्ले नगणलघुयुक्ताद् द्वितीयलघोः पूर्वमेव यतिनियमः भवति। चरमे अर्धे अर्थात् द्वितीये श्लोकार्धे षष्ठः गणः लः (।) केवलं लघुवर्णरूपः भवति।

इत्थम् आर्यायाः द्वैविध्यं प्राप्तम्। यदि षष्ठे गणे जगणः अस्ति तर्हि जगणषष्ठार्या तथा च यदि षष्ठे गणे चत्वारः लघवः सन्ति तर्हि नलघुषष्ठार्या प्रोच्यते। अत्रैव लक्षणरूपेण उक्तं श्लोकद्वयमपि उदाहरणरूपेण स्वीकुर्मः।

जगणषष्ठार्या—

लक्ष्मै तत्सप्त गणा गोपेता भवति नेह विषमे जः
ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ ऽ । । । ऽ । । । ऽ ऽ
षष्ठो जश्च नलघु वा प्रथमेऽर्धे नियतमार्यायाः
ऽ ऽ ऽ । । । । ऽ । । ऽ ऽ । । । ऽ ऽ ऽ

नलघुषष्ठार्या—

षष्ठे द्वितीयलात्परकेन्ले मुखलाश्च सयतिपदनियमः
ऽ ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । । । । । । । ऽ
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः
। । ऽ ऽ ऽ । । ऽ ऽ ऽ । । । । । ऽ ऽ ऽ

विशेषः—यद्यपि अत्र गणविचारस्य आवश्यकता नानुभूययते परन्तु श्लोकानां रचनाप्रसङ्गे अस्याः व्यवस्थायाः अपि आवश्यकता भवति अतः अत्र प्रोक्ता गणव्यवस्थापि बुद्धौ स्थाप्यताम्।

इयं चार्या नवधा वर्तते। तद्यथा—

पथ्या विपुला चपला मुखचपला जघनचपला च।
गीत्युपगीत्युद्गीतय आर्यागीतिश्च नवधार्या॥

अर्थात्—पथ्या, विपुला, चपला, मुखचपला, जघनचपला, गीतिः उपगीतिः उद्गीतिः आर्यागीतिरिति प्रकारान्तरेण नवधा आर्या वर्तते। एतासां नवविधानाम् आर्याणाम् अत्रानुक्तानाम् अन्यासां च जातीनां संस्कृतवाङ्मये व्यापकाभावाद्विवरणं न क्रियते। जिज्ञासवः छन्दोमञ्जरी वृत्तरत्नाकरः इत्यादीन् ग्रन्थान् परिशीलयितुमर्हन्ति।

## २. अनुष्टुप्

शिवा—एकाक्षरात्पादाद् आरभ्यैकाक्षरवर्धितैः पादैः उक्थादीनि षड्-विंशतिः समवृत्तानि भवन्ति। एतेषां सर्वेषां विवरणम् अग्रिमेऽध्याये वर्तते। तेषु अष्टमं वृत्तम् अनुष्टुब् इति। अत्र प्रतिपादमष्टौ वर्णाः भवन्ति। अर्थात् चतुर्षु पादेषु आहत्य द्वात्रिंशद्वर्णाः भवन्ति। अस्य असंख्यकाः भेदाः सन्ति परं प्रसिद्धिदृष्ट्या श्लोक-पद्याख्ययोः द्वयोः भेदयोः वर्णनं क्रियते। तद्यथा—

**श्लोकवृत्तम्—**

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोः ह्रस्वं सप्तमं दीर्घमन्ययोः॥

अर्थात्—यस्य वृत्तस्य (श्लोकस्य) चतुर्ष्वपि पादेषु पञ्चमम् अक्षरं लघु षष्ठं च गुरु स्यात्तथा च प्रथमतृतीययोः पादयोः सप्तमम् अक्षरं दीर्घं द्वितीयचतुर्थयोः पादयोः सप्तमम् अक्षरं ह्रस्वं स्यात्तद्वृत्तं 'श्लोकः' (अनुष्टुप्) इति वर्तते। उदाहरणरूपेण इदमेव पद्यं स्वीकर्तुं शक्यते। तद्यथा—

श्लोके षष्ठं गुरु ज्ञेयं, सर्वत्र लघु पञ्चमम्।
I S S I S I
द्विचतुष्पादयोः ह्रस्वं, सप्तमं दीर्घमन्ययोः॥
I S S I S I

अनुष्टुप्छन्दसः भेदभूतस्य अस्य श्लोकाख्यस्य वृत्तस्य लक्षणमतीव व्याप्तमस्ति लौकिके संस्कृतसाहित्ये। अर्थाद्वाल्मिकी-रामायणमहाभारतपुराणोपपुराणानन्तलौकिककाव्यादीनां श्लोकेषु प्रायेण इदमेव वृत्तं व्याप्तं भवति। यद्यपि विशालं लौकिकं संस्कृतसाहित्यमेव अस्य उदाहरणस्वरूपेण वर्तते, तथापि कानिचन प्रसिद्धानि उदाहरणानि यथा—

विद्या ददाति विनयं विनयाद्याति पात्रताम्। —पद्यस्योदाहरणम्
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम्॥

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

पद्यवृत्तं यथा—

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम्॥

अर्थात्—यस्य वृत्तस्य (पद्यस्य) चतुर्ष्वपि पादेषु पञ्चममक्षरं लघु स्यात्, द्वितीयचतुर्थयोः पादयोः षष्ठम् अक्षरं गुरु सप्तमञ्च लघु स्यात्तथा च शेषे अनियमः स्यात्तद्वृत्तं 'पद्यम्' इति प्रचक्ष्यते। उदाहरणं यथा—

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
। ।ऽ।

नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥
। ।ऽ।

## ३. इन्द्रवज्रा

### स्यादिन्द्रवज्रा यदि तौ जगौ गः

शिवा—यत्र वृत्तेषु यदि प्रतिपादं क्रमेण तगणः, तगणः, जगणः गुरुः गुरुश्च भवेत् तर्हि इन्द्रवज्रानाम वृत्तं स्यादिति लक्षणार्थः। अर्थात् चतुर्ष्वपि पादेषु यदि क्रमेण तगणद्वयम्, जगणः गुरुद्वयञ्च भवति तर्हि तत्र इन्द्रवज्रानाम वृत्तं भवति। तश्च तश्च तौ जश्च गश्च जगौ (इतरेतरयोगद्वन्द्वः)।

लक्षणसमन्वयः—

| स्यादिन्द्रवज्रा | | यदि | तौ | जगौ | गः |
|---|---|---|---|---|---|
| ऽऽ। | ऽऽ। | । ऽ। | | ऽ | ऽ |
| तगणः | तगणः | जगणः | | गुरुः | गुरुः |

एवम्प्रकारेण गणपरिचयं प्राप्य लक्षणे एव यतिविचारमपि कुर्मः। अत्र लक्षणे यतिबोधकं पदं किमपि नास्ति अतः पादान्ते श्लोकार्धे च यतिः भविष्यति। यतः यत्र यतिनिर्देशनाय कोऽपि शब्दः नोक्तः भवति तत्र यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः इति नियमानुसारेण पादान्ते श्लोकार्धे च यतिः स्वीकरणीया इत्ययं विषयः प्रथमेऽध्याये एव विस्तरेण चर्चितः अस्ति, अतः तत्रैव पुनरपि यतिनियमाः अवलोक्यन्ताम् अभ्यस्यन्ताञ्च। अत्र पुनः पुनः पिष्ट-पेषणं न करिष्यते।

उदाहरणम्—

**आहार - निद्रा - भय - मैथुनानि**

ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ

तगणः | तगणः | जगणः | गः | गः

**सामान्यमेतद् पशुभिर्नराणाम्**

ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ

तगणः | तगणः | जगणः | गः | गः

**धर्मो हि तेषामधिको विशिष्टो**

ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ

तगणः | तगणः | जगणः | गः | गः

**धर्मेण हीनाः पशुभिः समानाः**

ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ

तगणः | तगणः | जगणः | गः | गः

अन्यानि उदाहरणानि—

जीवन्तु मे शत्रुगणाः सदैव
येषां प्रसादात्सुविचक्षणोऽहम्।
ये ये यथा मां प्रतिबाधयन्ति
ते ते तथा मां प्रतिबोधयन्ति॥

शास्त्रेषु निष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी।
कालानुरोधः प्रतिभानवत्वम्
एते गुणाः कामदुघा क्रियासु॥

पुत्रीति जातः महतीह चिन्ता कस्मै प्रदेयेति महान् वितर्कः।
दत्ता सुखं यास्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम्॥

## ४. उपेन्द्रवज्रा

उपेन्द्रवज्रा जतजास्ततो गौ

शिवा—चतुर्षु अपि पादेषु यदि क्रमेण जगणः तगणः जगणः गुरुद्वयञ्च भवेयुः तदा उपेन्द्रवज्रा भवति। तन्नाम इन्द्रवज्रायाः प्रथमवर्णः यदि लघ्वक्षरेण युक्तः भवति तर्हि सा उपेन्द्रवज्रा भवति इत्यर्थः। अतः एव क्वचित् उपेन्द्रवज्रा प्रथमे लघौ सा इत्यपि लक्षणं प्राप्यते।

लक्षणसमन्वयः—

उपेन्द्रवज्रा जतजास्ततो गौ
I S I | S S I | I S I | S | S
जगणः तगणः जगणः गुरुः गुरुः

उदाहरणम्—

त्वमेव माता च पिता त्वमेव
I S I | S S I | I S I | S | S
जगणः तगणः जगणः गः गः

त्वमेव बन्धुश्च सखा त्वमेव
I S I | S S I | I S I | S | S
जगणः तगणः जगणः गः गः

| त्वमेव | विद्या | द्रविणं | त्वमेव |
| --- | --- | --- | --- |
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ ऽ |
| जगणः | तगणः | जगणः | गः गः |

| त्वमेव | सर्वं मम | देव | देव |
| --- | --- | --- | --- |
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ ऽ |
| जगणः | तगणः | जगणः | गः गः |

अन्यानि उदाहरणानि—

परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः।
परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम्॥

अहो महत्त्वं महतामपूर्वं विपत्तिकालेऽपि परोपकारः।
यथास्यमध्ये पतितोऽपि राहोः कलानिधिः पुण्यचयं ददाति॥

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा।
अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो हि लोकः॥

## ५. उपजातिः

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।

शिवा—यदीयौ पादौ यस्य वृत्तस्य सम्बन्धिनौ पादौ चरणद्वयम् अनन्तरम् अव्यवहिततया प्रागेव उदीरितयोः इन्द्रवज्रोपेन्द्रवज्रयोः लक्ष्मभाजौ चिह्नयुक्तं स्यातां ताः उपजातयः। एतन्नामकं वृत्तं भवति इत्याशयः। सुस्पष्टञ्चेदं वृत्तं श्रीमद्वसन्तत्र्यम्बकसेवणेकृतवृत्त-मञ्जर्याम्। तद्यथा—

उपेन्द्रवज्राचरणः प्रयाति यत्रेन्द्रवज्राचरणेन योगम्।
छन्दोविदस्तामुपजातिमाहुः भवन्ति भेदाः बहवस्तदीयाः॥

अर्थात्—उपेन्द्रवज्रायाः पादः यदा इन्द्रवज्रायाः चरणेन योगं प्रयाति प्राप्नोति तदा तां छन्दोविदः उपजातिं वदन्ति, तदीयाः तस्याः बहव भेदाः सन्ति।

**विशेषः**—इन्द्रवज्रोपेन्द्रवज्रयोः प्रस्तारक्रमेण योगेन चतुर्दश उपजातयः भवितुमर्हन्ति। यथा—१. उइइइ २. इउइइ ३. उउइइ ४. इइउइ ५. उइउइ ६. इउउइ ७. उउउइ ८. इइइउ ९. उइइउ १०. इउइउ ११. उउइउ १२. इइउउ १३. उइउउ १४. इउउउ इति।

यथा एतेषां क्रमेण चतुर्दश उदाहरणानि—

१. उइइइ—

विवाहकाले ऋतुसम्प्रयोगे प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि॥

२. इउइइ—

उत्साहसम्पन्नमदीर्घसूत्रं च क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः॥

३. उउइइ—

वने वने शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि॥

४. इइउइ—

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।
खलस्य साधोर्विपरीतमेतत् ज्ञानाय दानाय च रक्षणाय॥

५. उइउइ—

यथा विहङ्गास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति।
यथा तरुण्यः पतिमाश्रयन्ति सर्वे गुणाः काञ्चनमाश्रयन्ति॥

६. इउउइ—

शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धिभावम्।
सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते॥

७. उउउइ—

न चोरचौर्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्॥

८. इइइउ—

सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामं च सुशीलता च।
एतानि यो धारयते स विद्वान् न केवलं यः पठते स विद्वान्॥

९. उइइउ—

श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचोऽप्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥

१०. इउइउ—

कुग्रामवासः कुजनस्य सेवा कुभोजनं क्रोधमुखी च भार्या।
मूर्खश्च पुत्रो विधवा च कन्या दहन्त्यमी वह्निमृते शरीरम्॥

११. उउइउ—

पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः।
नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः॥

१२. इइउउ—

शास्त्राण्यधीत्यापि भवन्ति मूर्खाः
यस्तु क्रियावान् पुरुषः स विद्वान्।
सुचिन्तितं चौषधमातुराणां
न नाममात्रेण करोत्यरोगम्॥

१३. उइउउ—

न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥

१४. इउउउ—

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते॥

अस्मिन् उपजातिवृत्तविषये उक्तं छन्दोविदाचार्येण केनचित्—

एकत्र पादे चरणद्वये वा पादत्रये वान्यतरः स्थितश्चेत्।
तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः॥

अस्य अर्थस्तु स्पष्टः एव। यथा इन्द्रवज्रोपेन्द्रवज्रयोः योगेन उपजातयः भवति तथैव वंशस्थ-इन्द्रवंशयोः, वंशस्थ-उपेन्द्रवज्रयोः, वंशस्थ-इन्द्रवज्रा-उपेन्द्रवज्राणाम्, वंशस्थ-इन्द्रवंशा-इन्द्रवज्रा-उपेन्द्रवज्रादीनां वा सम्मिश्रणेनापि उपजातयो भवन्ति, उक्तञ्च—

इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम।

इत्थं प्रकारेण अन्यासु इतरासु अपि मिश्रितासु द्विविधलक्षण-सम्मिलितासु इदमेव उपजातिरिति नाम भवति इत्यर्थः।

लक्षणसमन्वयः—

अनन्तरोदीरितलक्ष्मभाजौ

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ

जगणः तगणः जगणः गः गः

पादौ यदीयावुपजातयस्ताः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

तगणः तगणः जगणः गः गः

इत्थं किलान्यास्वपि मिश्रितासु

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

तगणः तगणः जगणः गः गः

वदन्ति जातिष्विदमेव नाम

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ

जगणः तगणः जगणः गुरुः गुरुः

उदाहरणम्—

कर्पूरगौरं करुणावतारं

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

तगणः तगणः जगणः गः गः

संसारसारं भुजगेन्द्रहारम्
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
तगणः तगणः जगणः गः गः

सदा वसन्तं हृदयारविन्दे
। ऽ । ऽ ऽ । । ऽ । ऽ ऽ
तगणः तगणः जगणः गः गः

भवं भवानीसहितं नमामि
। ऽ । ऽ ऽ । । ऽ । ऽ ऽ
तगणः तगणः जगणः गः गः

अन्यानि चतुर्दश उदाहरणानि उपरि एव दत्तानि, तत्रैव अभ्यस्ताम्।

## ६. शालिनी

मात्तौ गौ चेच्छालिनी वेदलोकैः

शिवा—यस्य वृत्तस्य चतुर्षु पादेषु क्रमेण मात्तौ मगणात् परं तश्च तश्च तयोर्द्वन्द्वः तन्नाम तगणद्वयं गश्च गश्च गौ गुरू वर्णौ च भवेताम् तत् शालिनीनाम वृत्तं भवति।

विशेषः—अत्र वेदलोकौ शब्दौ स्तः, वेदाः चत्वारः लोकाश्च सप्त प्रसिद्धाः सन्ति इति हेतोः चतुर्थे सप्तमे च वर्णे यतिः स्वीकरणीया।

लक्षणसमन्वयः—

मात्तौ गौ चेच्छालिनी वेदलोकैः
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः तगणः तगणः गःगः

उदाहरणम्—

एको देवः केशवो वा शिवो वा
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः तगणः तगणः गुरुः गुरुः

एकं मित्रं भूपतिर्वा यतिर्वा
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः तगणः तगणः गः गः

एको वासः पत्तने वा वने वा
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः तगणः तगणः गुरुः गुरुः

एका नारी सुन्दरी वा दरी वा
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः तगणः तगणः गुरुः गुरुः

अन्यानि उदाहरणानि—

चित्ते भ्रान्तिर्जायते मद्यपानात् भ्रान्ते चित्ते पापचर्यामुपैति।
पापं कृत्वा दुर्गतिं यान्ति मूढाः तस्मान्मद्यं नैव पेयं न पेयम्॥

चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम्।
तस्माच्चित्तं सर्वदा रक्षणीयं स्वस्थे चित्ते बुद्धयः सम्भवन्ति॥

विद्या कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च।
येषामेते षड्गुणाः न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण॥

## ७. वंशस्थम्

जतौ तु वंशस्थमुदीरितं जरौ

शिवा—यस्य समवृत्तस्य प्रत्येकम् अपि पादेपु यदि क्रमेण जगणः, तगणः, जगणः रगणश्च स्यात् तर्हि तत् वंशस्थं भवति।

लक्षणसमन्वयः—

जतौ तु वंशस्थमुदीरितं जरौ

। ऽ । (जगणः) ऽ ऽ । (तगणः) । ऽ । (जगणः) ऽ । ऽ (रगणः)

उदाहरणम्—

मनीषिणः सन्ति न ते हितैषिणो

। ऽ । (जगणः) ऽ ऽ । (तगणः) । ऽ । (जगणः) ऽ । ऽ (रगणः)

हितैषिणः सन्ति न ते मनीषिणः

। ऽ । (जगणः) ऽ ऽ । (तगणः) । ऽ । (जगणः) ऽ । ऽ (रगणः)

सुहृच्च विद्वान्नपि दुर्लभो नृणां

। ऽ । (जगणः) ऽ ऽ । (तगणः) । ऽ । (जगणः) ऽ । ऽ (रगणः)

यथौषधं स्वादु हितं च दुर्लभम्

। ऽ । (जगणः) ऽ ऽ । (तगणः) । ऽ । (जगणः) ऽ । ऽ (रगणः)

अन्यानि उदाहरणानि—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति॥

निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषिमनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति॥

क्रतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसङ्ग्रहे।
प्रियासु नारीष्वधनेषु बन्धुषु धनव्ययस्तेषु न गण्यते बुधैः॥

## ८. वसन्ततिलका

**उक्ता वसन्ततिलका तभजा जगौ गः**

शिवा—चतुर्षु पादेषु क्रमेण यदि तगणः, भगणः, जगणः, जगणः, द्वौ गुरुवर्णौ च स्युः तर्हि तत् वसन्ततिलकनाम वृत्तं भवति।

लक्षणसमन्वयः—

उक्ता वसन्ततिलका तभजा जगौ गः
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
तगणः भगणः जगणः जगणः गः गः

उदाहरणम्—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
तगणः भगणः जगणः जगणः गः गः

दैवेन देयमिति कापुरुषा वदन्ति
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
तगणः भगणः जगणः जगणः गः गः

दैवं निहत्य कुरु पौरुषमात्मशक्त्या
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
तगणः भगणः जगणः जगणः गः गः

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
तगणः भगणः जगणः जगणः गः गः

इतराणि उदाहरणानि—

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविकृता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य चोत्तमजनाः न परित्यजन्ति॥

मोहं रुणद्धि विमलीकुरुते बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न कुरुते कमिहोपकारम्॥

## ९. मालिनी

### ननमयययुतेयं मालिनी भोगिलोकैः

शिवा—नगण-नगण-मगण-यगण-यगणैः युता मालिनी भवति, भोगिलोकैश्च यतिः भवति। अर्थात् यस्य वृत्तस्य चतुर्षु अपि पादेषु क्रमेण यदि नगण-नगण-मगण-यगण-यगणाः स्युः तर्हि तन्मालिनीनाम वृत्तं भवति। अत्र लक्षणे यतिसूचकौ भोगिलोकौ शब्दौ स्तः। भोगिनः नागाः (सर्पाः) तक्षाद्यः अष्टौ प्रसिद्धाः सन्ति। लोकास्तु सप्त प्रसिद्धाः अतः अष्टमे सप्तमे वर्णे यतिः कल्पनीया भविष्यति।

लक्षणसमन्वयः—

ननमयययुतेयं मालिनी भोगिलोकैः
ו ו ו ו ו ו ऽ ऽ ऽ ו ऽ ऽ ו ऽ ऽ
नगणः नगणः मगणः यगणः यगणाः

उदाहरणम्—

अतुलितबलधामं स्वर्णशैलाभदेहं
ו ו ו ו ו ו ऽ ऽ ऽ ו ऽ ऽ ו ऽ ऽ
नगणः नगणः मगणः यगणः यगणाः

दनुजवनकृशानुं ज्ञानिनामग्रगण्यम्
I I I I I I S S S I S S I S S
नगणःनगणः मगणः यगणः यगणाः

सकलगुणनिधानं वानराणामधीशं
I I I I I I S S S I S S I S S
नगणःनगणः मगणः यगणः यगणाः

रघुपतिप्रियदूतं वातजातं नमामि
I I I I I I S S S I S S I S S
नगणःनगणः मगणः यगणः यगणाः

इतराणि उदाहरणानि—

करचरणकृतं वा कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो ॥

मनसि वचसि काये पुण्यपीयूषपूर्णाः
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः।
क्व वत हरिणकानां जीवितं चातिलोलम्
क्व च निशितनिपाताः वज्रसाराः शरास्ते॥

## १०. शिखरिणी

### रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी

**शिवा**—यस्य वृत्तस्य चतुर्षु अपि पादेषु क्रमेण यदि यगण-मगण-नगण-सगण-भगणाः लघुगुरू च स्युः तथा च षष्ठे एकादशे च यतिः स्यात् तर्हि शिखरिणीनाम वृत्तं भवति। अत्र लक्षणे यतिसूचकौ रसरुद्रौ शब्दौ स्तः। लोके षड् रसाः एकादश रुद्राश्च प्रसिद्धाः सन्ति अतः षष्ठे एकादशे च यतिः चिन्तनीया।

लक्षणसमन्वयः—

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी
ISS SSS III IIS SII I S
यगणः मगणः नगणः सगणः भगणः लःगः

उदाहरणम्—

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
ISS SSS III IIS SII I S
यगणः मगणः नगणः सगणः भगणः लःगः

तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः
IS SSSS III IIS S II I S
यगणः मगणः नगणः सगणः भगणः लःगः

यदा किञ्चित् किञ्चित् बुधजनसकाशादवगतं
ISS S S S III IIS SII I S
यगणः मगणः नगणः सगणः भगणः लःगः

तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः
ISS SSS III IIS SII I S
यगणः मगणः नगणः सगणः भगणः लःगः

इतराणि उदाहरणानि—

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथा।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम्॥

पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तव सुतः।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥

## ११. मन्दाक्रान्ता

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्

शिवा—यस्य चतुर्षु चरणेषु क्रमेण मगणः भगणः नगणः तगणः तगणः गुरुः गुरुः च वर्णः भवेत् तत् मन्दाक्रान्तानाम वृत्तं भवति। अस्मिन् चतुर्भिः षड्भिः सप्तभिश्च वर्णैः यतिः भवति। अर्थात् जलधयः समुद्राः चत्वारः प्रसिद्धाः, अगाः पर्वताः सप्त प्रसिद्धाः अतः चतुर्थे षष्ठे सप्तमे च वर्णे यतिः भविष्यति।

लक्षणसमन्वयः—

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्

| ऽ ऽ ऽ | ऽ । । | । । । | ऽ ऽ । | ऽ ऽ । | ऽ | ऽ |
|---|---|---|---|---|---|---|
| मगणः | भगणः | नगणः | तगणः | तगणः | गः | गः |

उदाहरणम्—

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः भगणः नगणः तगणः तगणः गःगः

विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः भगणः नगणः तगणः तगणः गःगः

लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः भगणः नगणः तगणः तगणः गःगः

वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
मगणः भगणः नगणः तगणः तगणः गःगः

इतराणि उदाहरणानि—

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्॥

दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद् गृहपतिरिति श्रूयते वाक्यतोऽत्र॥

विद्यातीर्थे जगति विबुधाः साधवः सत्यतीर्थे
गङ्गातीर्थे मलिनमनसो योगिनो ध्यानतीर्थे।
धारातीर्थे धरणिपतयो दानतीर्थे धनाढ्याः
लज्जातीर्थे कुलयुवतयः पातकं क्षालयन्ति॥

## १२. शार्दूलविक्रीडितम्

### सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्

शिवा—यस्य चतुर्षु चरणेषु क्रमेण मगणः सगणः जगणः सगणः तगणः तगणः गुरुः च वर्णः भवेत् तत् शार्दूलविक्रीडितनाम वृत्तं भवति। सूर्याः द्वादश अश्वाश्च सप्त प्रसिद्धाः सन्ति अतः द्वादशे सप्तमे च अक्षरे च यतिः स्वीकरणीया भवति।

लक्षणसमन्वयः—

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्

ऽऽऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

उदाहरणम्—

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो

ऽऽऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ

ऽऽऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैः विषम्

ऽऽऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्

ऽऽऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

अन्यानि उदाहरणानि—

शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्।

हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणा वरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवं
विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः॥

## १३. स्रग्धरा

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितयेम्

शिवा—मरभनैः गणैः यगणत्रयेण च युक्ता त्रिवारं मुनिषु यतियुता च इयं स्रग्धरा अर्थात् यस्याः चतुर्षु चरणेषु क्रमेण मगणः, रगणः, भगणः, नगणः, यगणः, यगणः, यगणः च भवेत् सा स्रग्धरा भवतीत्यर्थः।

लक्षणसमन्वयः—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितयेम्
ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ
मगणः रगणः भगणः नगणः यगणः यगणः यगणः

उदाहरणम्—

क्षीरिण्यः सन्तु गावो भवतु वसुमतिः सर्वसम्पन्नसस्या
ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ
मगणः रगणः भगणः नगणः यगणः यगणः यगणः

पर्जन्यः कालवर्षी सकलजनमनोनन्दितो वान्तु वाताः।
ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ
मगणः रगणः भगणः नगणः यगणः यगणः यगणः

मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः

ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

श्रीमन्तः पातु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः

ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

अन्यानि उदाहरणानि—

क्षीरिण्यः सन्तु गावो भवतु वसुमतिः सर्वसम्पन्नसस्या
पर्जन्यः कालवर्षी सकलजनमनोनन्दितो वान्तु वाताः।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पातु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः॥

ब्रह्मा रुद्रः कुमारो हरिवरुणयमा वह्निरिन्द्रः कुबेरः
चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वी भुजङ्गाः।
सिद्धाः नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्याः
वेदास्तीर्थानि यज्ञाः गणवसुमुनयः पान्तु नित्यं ग्रहाश्च॥

येषां श्रीमद्यशोदासुतपदकमले नास्तिभक्तिर्नराणाम्
येषामाभीरकन्याप्रियगुणकथने नानुरक्ता रसज्ञा।
येषां श्रीकृष्णलीलाललितरसकथासादरौ नैव कर्णौ
धिक्तान्धिक्तान्धिगेतान् कथयति सततं कीर्तनस्थो मृदङ्गः॥

अवधेयम्—

प्रथमाध्यायस्य अस्य अध्यायस्य च असकृदभ्यासेन विषयः सम्यग्रूपेण बुद्धौ स्थाप्यताम्। यतः अत्र अध्यायद्वये वर्णितः विषयः बुद्धौ स्थितश्चेत् छन्दस्सागरे तरणाय अतीव सारल्यं भविष्यति।

(इति द्वितीयोऽध्यायः)

# अथ तृतीयोऽध्यायः

प्रथमेऽध्याये पद्यं चतुष्पदीत्यनेन पद्यस्य स्वरूपं, तच्च वृत्तं जातिरिति द्विधेत्यनेन वृत्तजातिरूपाभ्यां पद्यस्य द्वैविध्यं तथा च वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेदित्यनेन जातिवृत्तयोः स्वरूपं वर्णितम्। तयोः मध्ये वृत्तनाम्नः भेदस्य सम-अर्धसम-विषमभेदेन त्रैविध्यं प्रतिपादितम्। तेषु त्रिविधरूपेण प्रसिद्धेषु वृत्तेषु चतुर्ष्वपि पादेषु समानरूपेण लक्षणं संघटिष्यमाणं समवृत्तमेकाक्षरात्पादादारभ्य एकैकाक्षरवर्धितपादैः षड्विंशतिर्मि अक्षराणि यावत् समवृत्तानि भवन्तीति प्रोक्तम्। उक्थादीनि नामानि प्रोच्य 'एतेषां समवृत्तानां स्थूलरूपेण परिचयः तृतीयेऽध्याये भविष्यति' इत्यपि प्रतिज्ञातम्। अतः तामेव प्रतिज्ञाम् अनुस्मृत्य अस्मिन् अध्याये एकाक्षरात् पादादारभ्य एकैकाक्षरवर्धितपादैः षड्विंशत्यक्षराणि यावत् सर्वेषामपि एकैकं लक्षणम् एकैकम् उदाहरणं च वक्ष्यते।

वक्ष्यमाणानां लक्षणानां संघटनं पूर्वम् उदाहरणेष्वेव भवति ततः परमेव प्रधानेषु उदाहरणेषु इति पूर्वाध्याये प्रोक्तमेव। लक्षणेषु एव प्राथम्येन लक्षणानां प्रथमोदाहरणरूपेण प्रस्तुतिः छन्दोमञ्जरीकारस्य वैशिष्ट्यम्। अतः मयापि तस्यैव ग्रन्थः प्रमुखाश्रयरूपेण स्वीकृतः। साम्प्रतम् उद्यमाने अस्मिन् अध्याये समवृत्तानां लक्षणानि उदाहरणानि च यथाक्रममुक्तानि। अर्थः विवरणं च ग्रन्थविस्तरभयात् न कृतं भवति। अतः एतेषां विस्तरेण विवरणं ज्ञातुमिच्छुकाः छन्दश्शास्त्रानुरागिणः छन्दोमञ्जरी वृत्तरत्नाकरः इत्यादीन् ग्रन्थान् पश्येयुः।

### १. उक्था (श्रीवृत्तम्)

लक्षणम्—ग् श्रीः

उदाहरणम्—श्रीस्ते। सास्ताम्॥

### २. अत्युक्था (स्त्रीवृत्तम्)

लक्षणम्—गौ स्त्री

उदाहरणम्—गोपस्त्रीभिः। कृष्णो रेमे॥

३. मध्या (नारीवृत्तम्)

लक्षणम्—मो नारी

उदाहरणम्—गोपानां नारीभिः। श्लिष्टोऽव्यात् कृष्णो वः।

४. प्रतिष्ठा (कन्यावृत्तम्)

लक्षणम्—ग्मौ चेत्कन्या

उदाहरणम्—भास्वत् कन्या सैका धन्या।
यस्याः कूले कृष्णोऽखेलत्॥

५. सुप्रतिष्ठा (पङ्क्तिवृत्तम्)

लक्षणम्—भ्गौ गिति पङ्क्तिः

उदाहरणम्—कृष्णसनाथा तर्णकपङ्क्तिः।
यामुनकच्छे चारु चचार॥

६. गायत्री (तनुमध्यावृत्तम्)

लक्षणम्—त्यौ चेत्तनुमध्या

उदाहरणम्—मूर्तिर्मुरशत्रोरत्यद्भुतरूपा।
आस्तां मम चित्ते नित्यं तनुमध्या॥

७. उष्णिक् (मधुमतीवृत्तम्)

लक्षणम्—ननगि मधुमती

उदाहरणम्—रविदुहितृतटे वनकुसुमततिः।
व्यधित मधुमती मधुमथनमुदम्॥

८. अनुष्टुप् (अनुष्टुप्)

लक्षणम्—श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोः ह्रस्वं सप्तमं दीर्घमन्ययोः॥

उदाहरणम्—पठामि संस्कृतं नित्यं वदामि संस्कृतं सदा।
ध्यायानि संस्कृतं सम्यग् वन्दे संस्कृतमातरम्॥

(प्रमाणिकावृत्तम्)

लक्षणम्—प्रमाणिका जरौ लगौ

उदाहरणम्—पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका:।

९. बृहती (भुजगशिशुभृतावृत्तम्)

लक्षणम्—भुजगशिशुभृता नौ मः

उदाहर.—ह्रदतटनिकटक्षोणी भुजगशिशुभृता याऽऽसीत्।
मुररिपुदलिते नागे व्रजजनसुखदा साऽभूत्॥

१०. पङ्क्तिः (रुक्मवतीवृत्तम्)

लक्षणम्—रुक्मवती सा यत्र भमस्गाः

उदाहरणम्—

कायमनोवाक्यैः परिशुद्धैः यस्य सदा कंसद्विषि भक्तिः।
राज्यपदे हर्म्यादिरुदारा रुक्मवती विघ्नः खलु तस्य॥

११. त्रिष्टुप् (इन्द्रवज्रावृत्तम्)

लक्षणम्—स्यादिन्द्रवज्रा यदि तौ जगौ गः।

उदाहरणम्—

सम्पूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम्।
विद्वान् कुलीनो न करोति गर्वं जल्पन्ति मूढास्तु गुणैर्विहीनाः॥

(उपेन्द्रवज्रावृत्तम्)

लक्षणम्—उपेन्द्रवज्रा प्रथमे लघौ सा

उदाहरणम्—यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति।
तथा तवामी नरलोकवीराः
विशन्ति वक्त्राण्यभिविज्वलन्ति॥

(उपजातिवृत्तम्)

लक्षणम्—

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।
इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम॥

उदाहरणम्—

असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ॥

(शालिनीवृत्तम्)

लक्षणम्—मात्तौ गौ चेच्छालिनी वेदलोकैः

उदाहरणम्—

काके शौचं द्यूतकारे च सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा॥

(रथोद्धतावृत्तम्)

लक्षणम्—रात्परैर्नरलगै रथोद्धता।

उदाहरणम्—

शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे।
बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना॥

(दोधकवृत्तम्)

लक्षणम्—दोधकमिच्छति भत्रितयाद् गौ।

उदाहरणम्—

देव सदोध कदम्बलतस्थ श्रीधर तावकनामपदं मे।
कण्ठतले सुविनिर्गमकाले स्वल्पमपि क्षणमेष्यति योगम्॥

१२. जगती (वंशस्थवृत्तम्)

लक्षणम्—वदन्ति वंशस्थविलं जतौ जरौ

उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः॥

(भुजङ्गप्रयातवृत्तम्)

लक्षणम्—भुजङ्गप्रयातं चतुर्भिर्यकारैः

उदाहरणम्—

नमस्ते सदा वत्सले मातृभूमे त्वया हिन्दुभूमे सुखं वर्धितोऽहम्।
महामङ्गले पुण्यभूमे त्वदर्थे पतत्वेष कायो नमस्ते नमस्ते॥

(तोटकवृत्तम्)

लक्षणम्—वद तोटकमब्धिसकारयुतम्

उदाहरणम्—मणिना वलयं वलयेन मणिः
मणिना वलयेन विभाति करः।
कविना च विभुर्विभुना च कविः
कविना विभुना च विभाति सभा॥

(स्रग्विणीवृत्तम्)

लक्षणम्—कीर्तितेषा चतूरेफिका स्रग्विणी

उदाहरणम्—

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम्।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे॥

(द्रुतविलम्बितवृत्तम्)

लक्षणम्—द्रुतविलम्बितमाह नभौ भरौ

उदाहरणम्—

शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपि बन्धनम्।
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवान् इति मे मतिः॥

१३. अतिजगती (प्रहर्षिणीवृत्तम्)

लक्षणम्—त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्।

उदाहरणम्—

गोपीनामधरसुधारसस्य पानैरुत्तुङ्गस्तनकलशोपगूहनैश्च।
आश्चर्यैरपि रतिविभ्रमैर्मुरारेः संसारे मतिरभवत्प्रहर्षिणीह॥

## १४. शक्वरी (वसन्ततिलकावृत्तम्)

लक्षणम्—उक्ता वसन्ततिलका तभजा जगौ गः

उदाहरणम्—यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।
अस्मत्कृते तु परितुष्यति काचिदन्या
धिक्तां च तं च मदनं च इमां च मां च॥

## १५. अतिशक्वरी (मालिनीवृत्तम्)

लक्षणम्— ननमयययुतेयं मालिनी भोगिलोकैः।

उदाहरणम्—प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः
स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः।
अतिपरिचयदोषात् कस्य नो मानहानिः
नवनवगुणरागी प्रायशः सर्वलोकः॥

## १६. अष्टिः (पञ्चचामरवृत्तम्)

लक्षणम्—प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्।

उदाहरणम्—अकोऽकि दीर्घसन्धिराहुद्गुणो भवेदिकि,
त्ववर्ण एचि वृद्धिमेत्विको यणच्ययादयः।
स्युरेच एङ एत्यति प्रपूर्वता पदान्तगात्
सदा द्वितीयमीत्वमूत्वमेत्वमेति नान्यताम्॥

## १७. अत्यष्टिः (शिखरिणीवृत्तम्)

लक्षणम्—रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी।

उदाहरणम्—

वरं गर्भस्त्रावो वरमपि च नैवाभिगमनं
वरं जातः प्रेतो वरमपि च कन्यैव जनिता।

वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिः
न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः॥

(मन्दाक्रान्तावृत्तम्)

लक्षणम्—मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्

उदाहरणम्—

मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान् भोगिनि प्राप्तभोगः।
मूर्खे मूर्खः युवतिषु युवा वाग्मिषु प्रौढवाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः॥

**१८. धृतिः (चित्रलेखावृत्तम्)**

लक्षणम्—मन्दाक्रान्ता नपरलघुयुताः कीर्तिता चित्रलेखा।

उदाहर.—शङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासीद्
आकृष्येदं व्रजयुवतिसभा वेधस सा व्यधायि।
नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम्॥

**१९. अतिधृतिः (शार्दूलविक्रीडितवृत्तम्)**

लक्षणम्—सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्

उदाह.—विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो
धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा।
सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं
तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु॥

**२०. कृतिः (सुवदनावृत्तम्)**

ल.—ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना।

उदाहरणम्—

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका।

आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्तिं त्यक्तुकामा ननु नरकरिपो राधा मम सखी॥

२१.कृतिः (स्रग्धरावृत्तम्)

ल.—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्

उदाहरणम्—

अङ्गुल्याः कः कवाटं प्रहरति कुटिले माधवः किं वसन्तः
नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः।
नाहं घोराहिमर्दी किमुत खगपतिः नो हरिः किं कपीन्द्रः
इत्येवं सत्यभामाप्रतिवचनजितः पातु नश्चक्रपाणिः॥

२२. आकृतिः (मदिरावृत्तम्)

लक्षणम्—सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा।

उदाहरणम्—

माधवमासि विकस्वरकेसरपुष्पलसन्मदिरा मुदितैः
भृङ्गकुलैरुपगीतवने वनमालिनमालि कलानिलयम्।
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं
तं भज माधविकामृदुनर्तकयामुनवातकृतोपगमा॥

२३. विकृतिः (अद्रितनयावृत्तम्)

ल.—नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया।

उदाहरणम्—

खरतरशौर्यपावकशिखापतङ्गनिभभग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंस शमनस्तवेति तमवोचदद्रितनया॥

२४. संस्कृतिः (तन्वीवृत्तम्)

लक्षणंम्—भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च
यदि भवति तन्वी।

उदाहरणम्—

माधव! मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा।
पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनैः
निश्वसती सा मुहुरति पुरुषं ध्यानलये तव निवसति तन्वी॥

## २५. अतिकृतिः (क्रौञ्चपदावृत्तम्)

लक्षणम्—क्रौञ्चपदा स्यात् भो मसभा-
श्चेदिषुशरवसुमुनियतिरिनलघुगैः।

उदाहरणम्—

क्रौञ्चपदाली चित्रिततीरा मदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी।
फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः
पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा॥

## २६. उत्कृतिः (भुजङ्गविजृम्भितवृत्तम्)

लक्षणम्—वस्वीशाश्वैश्छेदोपेतं भमतन-
युगनरसलगैर्भुजङ्गविजृम्भितम्।

उदाहरणम्—

हेलोदञ्चन्न्यञ्चत्पादप्रकटविकटनभरो रणत्करतालकः
चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयस्तरङ्गितहारधिक्।
त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः
पायान्नश्छिन्दन्कालिन्दीह्रदकृतनिजवसतिबृहद्भुजङ्गजृम्भितम्॥

विशेषः—यद्यपि अत्रोक्तानाम् उक्था-अत्युक्था-मध्या-सुप्रतिष्ठा-गायत्री-उष्णिग्-आकृति-विकृति-संस्कृति-अतिकृति-उत्कृतीत्यादीनां समवृत्तानां तथा च वक्ष्यमाणानां दण्डकानां प्रयोगः संस्कृतसाहित्ये प्रायेण न दृश्यते एव, तथापि परिचयदृष्ट्या एव एतानि प्रोक्तानि।

## दण्डकाः

**शिवा**—यदि कस्यचिद् वृत्तस्य प्रतिपादं षड्विंशतेः अधिकानि अक्षराणि भवन्ति तर्हि तद्दण्डकवृत्तमित्युच्यते। एतेषां दण्डकवृत्तानां सङ्ख्या कुत्रापि स्पष्टतया नोक्ता दृश्यते। एतेषां प्रयोगः अपि प्रायेण लौकिके साहित्ये न दृश्यत इति पूर्वमेवोक्तम्। अस्माभिरधीते संस्कृतसाहित्ये दण्डकानाम् उदाहरणानि न प्राप्तानि इति कारणेन छन्दोमञ्जर्याः वृत्तरत्नाकरस्य वा एव लक्षणोदाहरणानि स्वीकृतानि यानि च ग्रन्थकारस्यैव सन्तीति स्पष्टमेव। तद्यथा केचन दण्डकाः—

### चण्डवृष्टिप्रपातो दण्डकः

**लक्षणम्**—यदिह नयुगलं ततः सप्त रेफास्तदा
चण्डवृष्टिप्रपातो भवेद्दण्डकः।

**अर्थात्**—यस्य वृत्तस्य चतुर्ष्वपि पादेषु यदि क्रमेण द्वौ नगणौ सप्त रगणाः च स्युः तर्हि सः चण्डवृष्टिप्रपातो नाम दण्डको भवति। अस्मिन् वृत्ते आहत्य सप्तविंशतिः अक्षराणि भवन्ति।

**उदाहरणम्**—

**प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं सपदि समवलोक्य सव्येन हस्तेन गोवर्धनन्नाम शैलन्दधल्लीलया। कमलनयन रक्ष रक्षेति जल्पत्त्रसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय नः॥**

**अवधेयम्**—अत्र सप्तविंशति-अक्षरात्मकः चण्डवृष्टिप्रपातो नाम दण्डको प्रोक्तः। अत्रैव यदि एकैक-रगणवृद्धिः क्रियते तर्हि क्रमेण अर्ण-अर्णव-व्याल-जीमूत-लीलाकर-उद्दाम-शंखादयः दण्डकाः भवन्ति। अर्थात् एतेषु दण्डकेषु प्रतिपादं क्रमेण ३०, ३३, ३६, ३९, ४२, ४५, ४८ अक्षराणि भवन्ति। एवमेव अन्येऽपि प्रचितक-अशोकपुष्पमञ्जरी-कुसुमस्तवक-मत्तमातङ्गलीलाकर-अनङ्गशेखरेत्यादयः अपि दण्डकाः छन्दोग्रन्थेषु दृश्यन्ते परन्तु साम्प्रतिके संस्कृत-साहित्ये एतेषां प्रयोगाः नैव दृश्यन्ते इति हेतोः अलं विस्तरेण।

(इति तृतीयोऽध्यायः)

# चतुर्थोऽध्यायः

## ( अर्धसमवृत्तं, विषमवृत्तं श्लोकरचनाविधिः च )

**शिवा**—प्रथमेऽध्याये पद्यस्य वृत्तं जातिरिति भेदेन द्वैविध्यं तथा च तयोः अन्यतरद् वृत्तं सम-अर्धसम-विषमञ्चेति भेदेन त्रिधा भवतीति प्रोक्तम्। तेषु त्रिप्रकारकेषु वृत्तेषु केषाञ्चन समवृत्तानां विस्तरेण विवरणं द्वितीयेऽध्याये, अन्येषां च केषाञ्चन स्थूलरूपेण परिचयः तृतीयेऽध्याये कृतः। अस्मिन्नध्याये तत्रानुक्तयोः द्वयोरपि अर्धसम-विषमवृत्तयोः परिचयदृष्ट्या विवरणं करिष्यते तथैव श्लोकरचनाविधेः परिचयोऽपि कारयिष्यते।

## अर्धसमवृत्तम्

**शिवा**—प्रतिपद्यं चत्वारः पादाः भवन्तीति पद्यं चतुष्पदी इत्यनेन पूर्वमेव उक्तम्। तत्र चतुर्षु पादेषु यदि प्रथमपादः तृतीयपादवत्स्यात् चतुर्थपादश्च द्वितीयपादवच्च स्यात्तर्हि तत् अर्धसमवृत्तं भवतीत्यपि प्रथमेऽध्याये एव प्रोक्तम्। अस्य अर्धसमवृत्तस्य यद्यपि उपचित्रम्, द्रुतमध्या, भद्रविराट्, वेगवती, केतुमती हरिणप्लुता, आख्यानकी, विपरीत-आख्यानकी, अपरवक्त्रम्, पुष्पिताग्रावियोगिनीत्यादीनि अनेकानि उदाहरणानि सन्ति, तथापि एतेषां प्रयोगस्य विरलताकारणेन परिचयदृष्ट्या केवलं वियोगिनीवृत्तस्य (क्वचिदस्याः वियोगिन्याः सुन्दरीत्यपि नाम दृश्यते)सोदाहरणं व्याख्या क्रियते। तद्यथा—

### वियोगिनी

**विषमे ससजाः गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी**

**अर्थात्**—विषमे पादे यदि सगणद्वयं जगणः गुरुश्च भवन्ति तथा च समे पादे सगणभगणरगणाः लघुः गुरुः च भवन्ति तर्हि वियोगिनीनाम वृत्तं भवति।

**लक्षणसमन्वयः**—

**विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी**

| I I S | I I S | I S I | S | I I S | S I I | S I S | I | S |
|---|---|---|---|---|---|---|---|---|
| सगणः | सगणः | जगणः | गुरुः | सगणः | भगणः | रगणः | ल | ग |

उदाहरणम्—

सुहृदामुपकारकारणाद् द्विषदामप्यपकारकारणात्

।।ऽ ।।ऽ ।ऽ। ऽ ।।ऽ ऽ।। ऽ।ऽ । ऽ

सगणः सगणः जगणः गः सगणः भगणः रगणः ल ग

नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम्

।।ऽ ।। ऽ ।ऽ । ऽ ।।ऽ ऽ । । ऽ । ऽ । ऽ

सगणः सगणः जगणः गः सगणः भगणः रगणः ल ग

## विषमवृत्तम्

शिवा—यस्य वृत्तस्य चत्वारोऽपि पादाः यदि भिन्नभिन्नलक्षणैः युक्ताः स्युस्तर्हि तद्विषमवृत्तं भवति। अस्य वृत्तस्य उद्गता, आपीडम्, कलिका, लवली, अमृतधारा, पदचतुरूर्ध्वम् इत्यादीनि उदाहरणानि। अत्र परिचयदृष्ट्या एकस्य एव विषमवृत्तस्य विवरणं क्रियते।

### उद्गता

प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्।
यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता॥

अर्थात्—यस्य वृत्तस्य प्रथमे पादे क्रमेण सगणः, जगणः, सगणः लघुश्च स्युः, द्वितीये पादे क्रमेण नगणः, सगणः, जगणः गुरुः च स्युः, तृतीये पादे क्रमेण भगणः, नगणः, भगणः गुरुश्च स्युः एवञ्च चतुर्थे पादे क्रमेण सगणः, जगणः, सगणः, जगणः गुरुश्च स्युः तद् उद्गतानाम वृत्तं भवति।

लक्षणसमन्वयः—

प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्

।।ऽ ।ऽ। ।।ऽ । ।।। ।।ऽ ।ऽ। ऽ

सगणः जगणः सगणः लः नगणः सगणः जगणः गः

यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता

ऽ।। ।।। ऽ।। ऽ ।।ऽ ।ऽ। ।।ऽ ।ऽ। ऽ

भगणः नगणः भगणः गः सगणः जगणः सगणः जगणः गः

अवधेयम्—अत्र लक्षणे एव लक्षणसमन्वयः कृतः वर्तते । एवमेव उदाहरणेऽपि लक्षणसमन्वयः करणीयः। उदाहरणम्—

विललास गोपरमणीषु तरणितनया प्रभोद्गता।
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम्॥

## श्लोकरचनाविधिः

( शतावधानिनः आचार्याः दोर्वलप्रभाकरशर्मगुरवः )

छन्दश्शास्त्रस्य मुख्यं प्रयोजनं श्लोकरचनशक्तेः काव्यकरणसामर्थ्यस्य च प्राप्तिरेव। अतः छन्दश्शास्त्रं सम्यक् परिज्ञाय काव्यं कर्तुं प्रयत्नं कुर्मः। श्लोकशब्दस्य स्तवनीयः इत्यर्थः। कीर्तिः इत्यप्यर्थः। अर्थात् श्लोकेन सम्यग्गुणाः कीर्तिश्च प्रकाशयितुं सम्पादयितुं च शक्यन्ते। यः विषयः वाक्यैः प्रतिपादयितुं शक्यते, सः यदि श्लोकेन प्रतिपाद्यते तदा श्रवणे धारणे च सुगमः भवति। एवं श्लोकरचनद्वारा अस्मद्देशे नैके शास्त्रविषयाः जीवनविषयाश्च सम्यगवगमिताः पूर्वैः। श्लोकः एव क्रमेण काव्यताम् आप्नोति। 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' इति मम्मटस्य काव्यप्रयोजनश्लोकं वयं जानीमः एव। वर्णनार्थकात् कवृधातोः उत्पन्नः काव्यशब्दः उपर्युक्तानंशान् अर्थविशेषान् बोधयति।

प्रारम्भे रचनं श्लोकस्य भवति। अभ्यासेन श्लोक एव काव्यं भवति। श्लोकरचनम् इत्युक्ते वक्तव्यस्य विषयजातस्य छन्दोबन्धनम्। अतः प्रथमं को वा विषयः वक्तव्यः इति प्रथमं निश्चयः कार्यः। ततः तस्य विषयस्य सम्बन्धिनः अंशाः सर्वे ग्राह्याः। तद्वाचकानि पदान्यपि सङ्ग्रहणीयानि। तेषु पदेषु कानि पदानि छन्दसः लघुगुरूणां मात्रागणानां च अनुकूलानि भवन्ति इति विचार्य तत्र उत्तमानि अर्थगम्भीराणि भावपूर्णानि च पदानि चित्वा निवेशनीयानि। तान्यपि उच्चारणकाले गणानां यतेः लयबद्धतायाः वा विरुद्धानि न भवेयुः। तत्र च विशेषेण यदि काव्यलक्षणानि गुणाः अलङ्काराः रसप्रधानाः शब्दाः अर्थाश्च वृत्तयः रीतयः शय्या इत्यादीनि भवन्ति, तर्हि तद् उत्तमं काव्यं भवति। रमणीयार्थप्रतिपादकाः के शब्दाः?

लोकोत्तराह्लादकराः चमत्कारकराः के वा अर्थाः व्यङ्ग्यार्थगूढार्थवन्तः निर्दोषा इत्यालोच्य तेषाम् अर्थानां वाचकाः उचिताः शब्दाः चयनीयाः। एतादृशानां वा शब्दानां वा परिचयः नवानां भावानाम् उद्गमः उत्तमानाम् अर्थानां चिन्तनं वा स्फुरणं वा पुराकृतपुण्यविशेषेणैव भवति। सा एव शक्तिः प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा इत्यादिशब्दैः उच्यते। सा प्रतिभा शक्तिर्वा मम नास्ति इति न चिन्तयित्वा प्रथमं पूर्वकवीनां काव्यानि श्लोका वा पठ्यन्ताम्, तेषाम् अनुकरणम् अनुलेखनं वा अभ्यासः अभ्यसनं वा क्रियताम्। मम्मटः काव्यमेवमेव प्रकाशितवान् 'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्, काव्यज्ञशिक्षयाऽभ्यासः इति हेतुस्तदुद्भवे इति। स्वयम् अभ्यसनं न कृत्वा काव्यज्ञद्वारा तस्य नेतृत्वे यदाध्ययनं कुर्मः तदा अवश्यं सुन्दरं कवित्वम् अस्माकं सिद्ध्यति।

उदाहरणार्थं शिवं स्वीकुर्मः। शिवस्य पर्यायशब्दाः शङ्करः शम्भुः ईशः ईश्वरः पशुपतिः शूली शितिकण्ठः इत्यादयः मनसि कार्याः। तदनन्तरम् एतेषां शब्दानां व्युत्पत्त्यर्थाः सम्यग्ज्ञेयाः ततः शिवस्य चरितं गुणाः स्वभावः रूपं लक्षणं चेत्यादिकं ज्ञातव्यम्। ततः शिवः ध्येयो वा नन्तव्यो वा वर्णनीयो वा इति तत्सम्बन्धीनि क्रियापदानि चिन्त्यानि। ततः कस्मिन् वृत्ते श्लोकनिबन्धनं करणीयम् इति विचिन्तनीयम्। ततः तत्र गणाः के भवन्तीति विचार्यम्। तत्राक्षराणि कानि मान्ति इति चालोच्यम्। अत्र वयं शिवं ध्यायामः। शिवः ध्यानकाले शान्तः भवेत् वयमपि शान्ताः भवेम श्लोकनिर्माणकाले। तस्य अवयवाः कथं भवेयुः स्वयम् अनुभूय कल्पयामः। शिवं शान्तमुपास्महे इत्यनुष्टुभः पादमेकं साधयामः प्रथमम्। तदनु क्रमेण शिवलक्षणानि तत्र योजयामः। यथा—

प्रसन्नमनसं दीप्तं हिमवत्स्वच्छविग्रहम्।
आत्मानमात्मनार्चन्तं शिवं शान्तमुपास्महे॥

इत्येवं श्लोकः पूरणीयः। एवमेव क्रमेणोत्तमश्लोकान् काव्यानि च विरचयामः।

दोर्बलप्रभाकरशर्मा



संस्कृतपिपठिषुभ्यः सङ्कल्पितः

# व्याकरणविद्यालयः

अगाधज्ञानवारिधौ संस्कृतक्षेत्रे काले यापिते अपि ततः अ[illegible]ज्ञानम् अवाप्तुम् असमर्थानां संस्कृतच्छात्राणां साहाय्य दृष्ट्या प्रा[illegible]काध्ययनं प्रबलीकरणाय श्रीमतां त्र्यम्बकेश्वरचैतन्यस्वामिनां संरक्षकत्वे श्रीमतां गुणप्रकाशचैतन्यस्वामिनां संयोजकत्वे च कल्पितः अयं व्याकरणविद्यालयः।

## विद्यालयस्य कार्यक्षेत्रम्

- अष्टमासिकं लघुसिद्धान्तकौमुदीशिक्षणम्
- द्विवार्षिकं सिद्धान्तकौमुदीशिक्षणम्
- मासिकं संस्कृतभाषाशिक्षणम्
- आङ्ग्लभाषाप्रशिक्षणम्
- शलाकापरीक्षा

**जिज्ञासवः सम्पृक्ताः भवन्तु**

**आचार्यसतीशः**

**श्रीअन्नपूर्णाशक्तिपीठम्, व्याकरणविद्यालयः**

गणपतिगोशालायाः समीपे, पलवारामार्गः बृजघट्टः गढमुक्तेश्वरः,

हापुडजनपदम्, उत्तरप्रदेशः

दूरभाषः- 08533960995, 08865091126, 09696852557

Email: - gunprakash201@gmail.com

## प्रमुखकर्त्तव्यानि

- प्रतिभावतां छात्राणां शास्त्राध्ययने नियोजनम्।
- तस्मिन् कार्ये अपेक्षित-अर्थव्यवस्थासम्पादनम्।
- स्थाने स्थाने शास्त्रकक्षाणां समारम्भणम्।

'यदि शास्त्रपरम्परा नष्टा भविष्यति तर्हि भारतस्य सर्वस्वं नश्येत' इति हेतोः शास्त्राध्ययनध्यापनसन्दर्भे विशिष्टतया चिन्तनीयम् अस्माभिः। यतो राष्ट्रविकासस्य अयमेव क्रमः –

राष्ट्ररक्षा

संस्कृतिरक्षा

संस्कृतरक्षा

शास्त्ररक्षा

शास्त्राध्ययनम्

भाषा

आवश्यकता वर्तते – न्यायव्याकरणयोः प्रारम्भिकस्य अध्ययनस्य दृढीकरणाय कृतसङ्कल्पानां संस्कृतनिष्ठानां शिक्षकाणां छात्राणाञ्च।

येभ्यः न्यायव्याकरणयोः शिक्षकाः अपेक्षिताः तेऽपि सम्पर्कं साधयितुमर्हन्ति। जिज्ञासुभिः ग्रन्थकर्ता सम्पृच्यताम्।